ॐ

# अथ वेदान्तपरिभाषा ।

पण्डित शिवदत्तकृतयार्थदीपिकाख्यटी-
कयासहिता ।

काशीनिवासिनिर्मल पं॰स्वामिश्रीगोविन्दसिंहेन
परिशोधिता.

सेयम्

क्षेमराज श्रीकृष्णदास इत्यनेन
मुम्बापुर्य्यां
स्वकीये "श्रीवेङ्कटेश्वर" मुद्रायन्त्रे
मुद्रयित्वा प्रकाशिता ।

संवत् १९५७, शके १८२२.

श्रीवेङ्कटेशो विजयतेतराम् ।



## विदुषामभ्यर्थना ।

अत्रास्माकं मुद्रणालय ऋग्वेदादयो वेदा उपनिषदो वेदान्त-
ग्रन्था महाभारतादीतिहासाः श्रीमद्भागवतादि महापु-
राणोपपुराणानि धर्मशास्त्र-कर्मकाण्ड-व्याकरण-
न्याय-योग-सांख्य-मीमांसादिशास्त्रीयग्रन्थाः
काव्य-नाटक-चम्पू-प्रहसन-व्यायोग-सट्ट-
काऽऽख्यायिकादिग्रंथाः सहस्रनामाद्यनेक-
स्तोत्रग्रन्थाश्च विविधभाषाग्रन्थाश्च सीस-
कोत्तममहल्लघ्वक्षरैर्मनोहरं मुद्रितास्ते
योग्यमूल्येन क्रय्याः सन्ति । तांश्च
ग्राहकायथापुस्तकसूचीपत्रं
मूल्यप्रेषणेन प्राप्नुयुः ।


**क्षेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" यन्त्रालयाध्यक्ष-खेतवाडी-मुम्बई.

ॐ

# भूमिका ।

अस्ति चेह नैसर्गिकी प्राणिपूरस्य दुःखतत्साधनप्रहाणपूर्वक-सुखतदुपायाभिमुखी यथामति प्रत्यहं प्रवृत्तिः सा च प्रतीत्या कदाचित्कथंश्चिदांशिकसफला सत्यपि नह्येकस्याप्येकान्तात्यन्ततो दुःखं निर्मूलयितुमलमिति सारासारसंशोधिन्या सामान्यमुख्या व्याख्या निश्चीयते । कारणश्चात्रविशेषतस्तत्तन्निदानस्वरूपापरि-ज्ञानमेव वाच्यम् । यद्यप्याध्यात्मिकाधिभौतिकाधिदैविकादिभेदाभिन्नं-दुःखं यथाविधिरसायनादिकामिनीनीतिशास्त्राभ्यासमन्त्राद्युपाययोगा-त्मकंतद्धानोपायश्च सामान्यतो जानन्त्येव विचारविमलाबुधास्तथापि तत्तदुपायाकूतैः दुःखनिवृत्तेरवश्यं भावो निवृत्तस्य दुःखस्य च पुनरनु-त्पादो वा नहि कदापि सम्भावयितुं शक्यते । एवं यावद्दुःखप्रत्यनीकप्रती-कारान्तरे चिन्तयितव्ये तत्र 'ज्ञानादेव कैवल्यं नान्यः पन्था विद्यते अयनाय ' ' सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि' 'ज्ञानं लब्ध्वापरां-शान्तिमचिरेणाधिगच्छति' 'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ' इत्यादि भ्रमप्रमादादिपुंदोषानास्कन्दितपूज्यवचनैर्ज्ञानमात्रमेवैक मवधार्य्यते तदपि ज्ञानं किमाकारकं किं विषयकं किं निमित्तकं चेति जिज्ञासायांसत्यां 'ब्रह्मविदाप्नोति परम्' 'ब्रह्मविद्ब्रह्मैव भवति' 'आत्मा-वा अरे द्रष्टव्यः श्रोतव्यः' 'एतं वै तमात्मानं विदित्वा' ' आत्मनं चेद्विजानीयादयमस्मीति पूरुषः' 'आत्मनि खल्वरे दृष्टे श्रुते मते' 'यदात्मनाऽऽत्मानं पश्यति' 'तदात्मनाऽऽत्मानं दृष्ट्वा निरात्मा भवति' 'शांतो दान्तः समस्तितिक्षुः समाहितो भूत्वा आत्मन्येवा-त्मानं पश्येत' इत्यादि सम्भावितवचनव्यूहेन ब्रह्मात्मैकत्वप्रकारकं स्वात्मविषयकं शमदमादिनिमित्तिकमेवापरोक्षात्मकं ज्ञानं वाच्यम् । तदपि ''एवं परंपराप्राप्तमिमं राजर्षयो विदुः'' इति भगवद्वचनाद्भगवतो वासु-

देवसकाशात् परंपरया प्राप्तं व्यासशुकगौडगोविन्दतीर्थाद्याधिगत-मतिगुह्यं ज्ञानामृतमखिललोकपावित्रीकरणाय शारीरकभाष्यात्मकदेवसरिदात्मना प्रस्तावयामासुरसीमगुणगरीयांसः श्रीशंकराचार्य्याः तस्यापि दुरधिगमत्वेनाल्पमतीनां पूर्वमेव तत्र प्रवेशाभावमनुसन्धाय तद्गतसांकेतिकशब्दार्थाववुद्धये 'वेदान्तपरिभाषा' नामकं निबन्धं निबबन्ध । सर्वशास्त्रविच्छ्रीमद्धर्मराजाध्वरीन्द्रः सूरिः सोऽयं स्वात्मसद्गुणैस्वकर्तुः कीर्तिं प्रख्यापयन् सर्वतो बहुधा लब्धप्रचारोऽपि यथाकथंचित् लिपिमुद्रणादिसाधारणदोषैर्न लेभे स्वात्मीयं पवित्रीभावं तदर्थं मया काशिकोदासीनवर्य्यश्रीमदमरदासनाम्नां सकाशात् प्रार्थनया प्राप्तपवित्रपुस्तकेन काशीनिवासिनिर्मल पं०स्वामिश्रीगोविन्दसिंहद्वाराभूयोपि कतिपयप्रतिसंयोजनेन परिशोधयित्वा सुप्रकाशितमिदं प्रकरणं प्रसीदतुचानेन विमलप्रयत्नेन पण्डितैः सह परमेश्वर इति निवेदयत्यहोरात्रम्–सज्जनानुगृहीतक्षेमराजश्रीकृष्णदासाख्यः श्रेष्ठिः इति ॥

**समणिप्रभाशिखामणिटीकासहिताऽपिवेदान्त-परिभाषामुद्रिताऽत्रोपलभ्यते ।**

भवदीय शुभाकांक्षी--

**क्षेमराज श्रीकृष्णदास,**

**"श्रीवेङ्कटेश्वर" मुद्रणालयाध्यक्ष–मुंबई.**

ॐ

# अथ वेदान्तपरिभाषाविषयसूची।



इति वेदान्तपरिभाषाविषयसूची समाप्ता ।



# अथ वेदांतपरिभाषा.

## अर्थदीपिकासहिता ।

---

### प्रत्यक्षपरिच्छेदः १.

॥ श्रीगणेशाय नमः ॥

[1]पपुं चक्रुं देवं हरमचलमाराध्यममरैः<br>
सहोराप्यं वीध्रं खरुजनदुरापंशुभकरम् ॥<br>
परेशं सर्वेषामतसममृतं सर्वमतुलं ।<br>
भजेहं तं विष्णुं शिवमखिलवेदांतविदितम् ॥ १ ॥<br>
नुमःश्रीबालगोपालतीर्थान् व्यासमुखान् मुनीन् ॥<br>
विघ्नहतॄन् गणेशादीन् पण्डितांश्च विमत्सरान् ॥ २ ॥<br>
पितरं मातरं नत्वा स्वीयनिर्बंधयंत्रितः ॥<br>
करोमि सुखबोधाय परिभाषार्थदीपिकाम् ॥ ३ ॥

**यदविद्याविलासेन भूतभौतिकसृष्टयः ॥**<br>
**तं नौमि परमात्मानं सच्चिदानन्दविग्रहम् ॥ १ ॥**

---

१ पपुं पालकं चक्रुं कर्तारमित्यर्थः। सहोराप्यं सहोरैः साधुभिराप्तुं योग्यमित्यर्थः। वीध्रं विमलं सकामैर्दुःखेन प्राप्तुमशक्यं "होरालग्नेपि राश्यर्द्धे शास्त्ररेखाभिदोरपि" इति हैमकोशात्। होराभिः शास्त्रैः सह वर्तते इति सहोराः शास्त्रविदस्तैराप्तुं योग्य इति सहोराप्यस्तामित्यर्थो वा ।अतसं अततीत्यतसः वायुरात्मा च तं प्रसिद्धं शिवमहं भजे इत्यन्वयः ।

श्रीमद्वेदांतार्थनिर्णयात्मकं प्रकरणमारभमाणो धर्मराजाध्वरींद्रो ग्रंथस्य निर्विघ्नपरिसमाप्त्यादिप्रयोजनमवगीतशिष्टाचारानुमितश्रुतिप्रमितकर्तव्यताकं मंगलमाचरन् प्रेक्षावत् प्रवृत्त्यंगभूते विषयप्रयोजने दर्शयति । (यदिति) ननुशिष्टाचारः किमाचारत्वाद्वेदमूलतां कल्पयति उत धर्मत्वात्, नाद्यः निष्ठीवनादेरपि तत्कल्पकत्वप्रसंगात् । न द्वितीयः धर्मत्वसिद्धौ वेदमूलकत्वं वेदमूलत्वे च धर्मत्वमित्यन्योन्याश्रयादिति चेन्न, शिष्टैर्धर्मबुद्ध्याऽनुष्ठीयमानस्याचारस्य तत्कल्पकत्वात्; नच शिष्टासिद्धिः वैदिकार्थानुष्ठातॄणांतत्त्वात्, तं परंपरमेश्वरं तत्पदवाच्यं नौमि, परं एव लक्षयितुं तटस्थलक्षणमाह (यदिति) यस्याविद्या यदविद्या यदधिष्ठिता यदधीनामायेत्यर्थः 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' 'दैवी ह्येषा गुणमयी ममभायादुरत्यया' इति श्रुतिस्मृतिभ्यां तस्याविलासः कार्याकारेण परिणामस्तेन भूतानां वियदादीनां सूक्ष्माऽसूक्ष्माणां भौतिकानां चराचराणां भूतकार्य्याणां च सृष्टयः। सृष्टिग्रहणं स्थितिप्रलययोरप्युपलक्षणम् । सृष्टिस्थितिप्रलयाः भवंतीत्यध्याहारः''अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः'' 'मयाध्यक्षेण प्रकृतिःसूयते सचराचरम्'इति श्रुतिस्मृतिभ्यां एवं तटस्थलक्षणमुक्त्वा स्वरूपलक्षणमाह ( सदिति ) एतेन शून्यवादिनः सांख्यवैशेषिकादेश्च मतंनिराकृतं वेदितव्यं, नतावत्शून्यं जगत्कारणम् भवति ''कथमसतः सज्जायेत''इति तर्कानुगृहीतया श्रुत्याऽसतस्तत् कारणत्वप्रतिषेधात् । निराधिष्ठानभ्रमानुपपत्तेः '' सदेवसोम्येदमग्रआसीत् '' '' सन्मूलाः सोम्येमाः प्रजाः'' इत्यादिश्रुत्या सत एव जगत्कारणत्वावगमाच्च ''असत् वा इदमग्रआसीत्'' इतिश्रुतिस्थासत्पदं तु अनभिव्यक्तनामरूपत्वेन गौण्या वृत्त्या सत्येव योजनीयं ''समाकर्षात्'' इति न्यायात् । प्रकृतस्यैव सत्यज्ञानादिलक्षणस्य सम्यक्नामरूपादिराहित्येन प्रतिपादनादिति सूत्रार्थः । नापि प्रधानपरमाण्वादेजगत्कारणत्वं संगच्छते '' सोऽकामयत बहुस्यां प्रजायेय '' '' आनंदाद्ध्येवखल्विमानिभूतानिजायंते आनंदेन जातानि जीवंति आनंदं प्रयंत्यभिसंविशंति '' इत्यादिश्रुत्या

---

१ वेदमूलता । २ शिष्टत्वात् ।

चिदानंदात्मकस्यैव तत्कारणत्वप्रतिपादनात् । परमेश्वरस्य ताटस्थ्यं वारयति ( आत्मानमिति ) अंतर्यामिणमित्यर्थः "एषत आत्मांतर्याम्यमृतः" इति श्रुतेः। लक्ष्यपक्षेतु तं परं मायादिपरं तदसंस्पृष्टं शुद्धं तत्पदार्थं नौमि। तमेव लक्षयति। यदिति। यत् यस्मिन् अविद्याया अविलासो यस्मिन् । तथाच यस्मिन्नविद्याविलासाभाववति भूतभौतिकसृष्टयो नैवसंति "नेहनानास्तिकिंचन" इत्यादिश्रुतेः। तत्स्वरूपं दर्शयति ( सच्चिदानंदविग्रहमिति ) सदादिपदलक्ष्यत्वात् तदात्मकमित्यर्थः। तस्यानात्मत्वं वारयति ( आत्मानमिति ) त्वंपदवाच्यलक्ष्यार्थावप्यनेन श्लोकेन दर्शितौ। तथाहि तमात्मानं नौमि देहाद्यात्मवादिनां मतं निराचष्टे ( परमिति ) तत्र न तावत् लोकायतिकेषु स्थूलोहं कृशोहमित्याद्यनुभवात् पृथिव्यादिभूतचतुष्टययोगजचैतन्यवान् स्थूलदेह एवात्मेति केषांचिदभिमत आत्मा देहस्य स्वप्नसुषुप्तयोरभोक्तृत्वात् । योहं बाल्येपितरौ अन्वभूवं सोहं स्थविरे नप्तॄन् अनुभवामीति प्रत्यभिज्ञानुपपत्तेः कृतहान्यकृताभ्यागमापत्तेश्च। नापि पश्याम्यहं शृणोम्यहमित्यनुभवादिंद्रियाण्यात्मा इत्यपरेषामभिमतः तेषां संहतानामात्मत्वे एकविनाशेप्यात्मनाशप्रसंगात् प्रत्येकमात्मत्वे विरुद्धदिक्क्रियतया शरीरोन्मथनतापातात्। अक्रियत्वापाताच्च। नाप्यशितपीतादिभोक्ता प्राण आत्मेत्यन्येषामभिमतः सत्यपि प्राणे सुषुप्तौ तस्यभोक्तृत्वादर्शनात् नापिसुख्यहं दुःख्यहमित्यनुभवात्सुखादिधर्मकंमनः आत्मेत्यपरेषामभिप्रेतः सर्वेन्द्रियानुग्राहकतया तस्य करणत्वानुभवात् तथा बौद्धेष्वपि कर्तृरूपं विज्ञानमात्मा तच्च क्षणिकं प्रदीपकलिकावदिति योगाचाराद्यभिमतोप्यात्मा न संभवति उक्तप्रत्यभिज्ञाविरोधात्। तदेतत्सर्वमभिप्रेत्योक्तं ( परमिति ) देहादिभ्योऽन्नमयादिकोशेभ्यः परं व्यतिरिक्तमित्यर्थः। एवं परमिति विशेषणेनैवचंदनबिंदुवदेकदेशस्थत्वेपि सर्वांगीणशैत्योपलंभोपपत्तेरणुरनागंतुकसुखदुःखादिमानित्येकदेशिमतं देहाद्विलक्षणो देहपरिमित इत्यार्हतमतं च निराकृतं वेदितव्यं, परंप्रकृष्टं विभुमित्यर्थावगमात् । आत्मनोऽणुत्वे चंदनबिंदुशैत्यवत् स्वाश्रयांशप्रसर्पणद्वारा निरंशाया

आत्मोपलब्धेः सर्वांगसंगित्वासंभवेन गंगाह्रदनिमग्नस्य युगपत्सर्वांगीणशैत्योपलंभाभावप्रसंगात् "वालाग्रशतभागस्य शतधा कल्पितस्य च॥ जीवो भागः स विज्ञेयः सचानंत्याय कल्पते"। "अणोरणीयान्" इत्याद्या श्रुतिस्तु "महतोमहीयान्" इति वाक्यशेषात् "महानज" इति श्रुत्यंतराच्चात्मनो दुर्लक्ष्यत्वमात्रपरा, नापिदेहपारिमित एकस्यात्मनः क्रमेण गजमनुजमशकशरीरप्राप्तावयवोऽपचयस्यावश्यकत्वेनानित्यत्वापातात्। एवंदेहाद्यात्मवादिनो निराकृत्य शून्यमात्मेति वादिनो माध्यमिकान् विभुत्वेपि तत्तदात्ममनसां स्वस्वामिभावसंबंधवशेन तत्तदात्मनि तत्तन्मनःसंयोगजसुखदुःखादिव्यवस्थोपपत्तेरनेको नित्योऽजो जडोपि बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्कारधर्म्माधर्मादिगुणानामाश्रयः कर्ता भोक्ताचेति वादितार्किकवैशेषिकप्राभाकरानहमनुभवस्योभयात्मत्वदर्शनात् जडबोधरूप इति वादिनो भाट्टांश्च निराचष्टे (सच्चिदानंदविग्रहमिति) "अस्तीत्येवोपलब्धव्य" इत्यादिश्रुतेः निराधिष्ठानकभ्रमाऽसंभवात् स्तनपानादिप्रवर्तकजन्मांतरीयसंस्कारानुवृत्तिदर्शनाच्च सदात्मकमित्यर्थः। एतेन शून्य वादिमतं निरस्तम् "अत्रायंपुरुषः" "स्वयंज्योतिः" "सत्यंज्ञानमनंतंब्रह्म" "अयमात्माब्रह्मसर्वानुभूः" इत्यादिश्रुत्या स्वयंप्रकाशत्वेन स्वयंप्रकाशज्ञानात्मत्वेन च प्रतिपादनात् चिदात्मकमित्यर्थः। ननु विज्ञानस्य कथं स्वप्रकाशतेतिचेन्न, विषयात्मविज्ञानानां त्रयाणामपि जडत्वे जगदांध्यप्रसंगात् विज्ञानस्य विज्ञानांतरसापेक्षत्वे तस्याऽपि जडत्वेनाऽनवस्थापाताच्च। अत्रायं प्रयोगः। विमतं विज्ञानं स्वसमानाश्रयस्वसमानकालस्वगोचरसंवेदनविरहप्रयुक्तव्यवहाररहितं नभवति विज्ञानत्वात् अनंतरव्यवहीयमाणविज्ञानवदिति। "विज्ञानमानंदंब्रह्म" इत्यादिश्रुतौमत्वर्थीयाच्प्र-

---

१ विमतं विज्ञानंस्वगोचरसंवेदनविरहप्रयुक्तव्यवहाररहितं नभवति, एतावदुक्ते परमते व्यवसायज्ञानमादायबाधशंकावारणाय स्वसमानकालेति संविद्विशेषणं पुरुषांतरज्ञानाभावमादाय सिद्धसाधनतावारणाय स्वसमानाश्रयेति संविद्विशेषणं पक्षीभूतविज्ञानशब्देनार्थांतरतावारणाय विमतति पक्षविशेषणम्।

त्ययंप्रकल्प्यविज्ञानमस्यास्तीति विज्ञानमिति व्याख्यानं तु नादरणीयं स्वरितस्वरोच्चारणसंप्रदायविरोधात् आत्मनोविज्ञानात्मत्वे त्वयं प्रयोगः । विज्ञाता न स्वातिरिक्तविज्ञानाधीनप्रकाशः विज्ञानकर्मतामंतरेण अपरोक्षत्वात् संवेदनवत् ॥ यद्वा । विज्ञाता स्वप्रकाशस्तत्त्वात्तद्वदिति[2] आत्मा परमानंदस्वभावः परप्रेमास्पदत्वात् व्यतिरेके घटवदित्यादियुक्त्या "आनंदोब्रह्म" इत्यादिश्रुत्या चानंदात्मकमित्यर्थः । जडाजडात्मकत्वं तु विरोधादेव न संभवति एतेन तार्किकादिमतं पराकृतम् । तत्त्वज्ञाननिवर्त्यत्वं बोधयितुं प्रपंचस्य जीवाश्रिताज्ञानकल्पितत्वं दर्शयति ( यदिति ) यदाश्रिताऽविद्याऽनाद्यज्ञानं तस्या विलासेन भूतभौतिकसृष्टयो भवंतीत्यर्थः । लक्ष्यपक्षेतु तं परमज्ञानादिसमस्तोपाधिविलक्षणमात्मानं नौमि परमिति । विशेषणेनाऽऽत्मानमित्येकवचनेन च तस्यभोक्तृत्वमनेकत्वं च वदंतः सांख्याः पातञ्जलाश्च पराकृता वेदितव्याः । शिष्टं तत्पदलक्ष्यवद्योजनीयम् । अखंडार्थोऽप्यनेन श्लोकेन दर्शितः । तथाहि । तंपरमात्मानं प्रत्यगभिन्नं परमात्मानं नौमि तज्ज्ञाननिवर्त्यत्वबोधनाय तद्विषयकाऽज्ञानकल्पितत्त्वं नामरूपात्मकप्रपंचस्य दर्शयति । यदिति । यदविद्या यद्विषयकमनाद्यऽनिर्वचनीयमज्ञानं तस्या विलासेन भूतभौतिकसृष्टयो भवंतीत्यर्थः । समानमन्यत् । तथाचाऽनेन श्लोकेन वंधस्याऽविद्यानिवर्त्यत्त्वं तत्त्वंपदाखंडार्थं च प्रदर्शयता जीवब्रह्मणोरैक्यमेवाऽज्ञातं सद्विषयोज्ञातं सत्प्रयोजनमिति प्रवृत्त्यङ्गभूते विषयप्रयोजने प्रकाशिते ॥ १ ॥

---

१ विज्ञानमानंदमिति विज्ञायतेयत्तदिति विज्ञातिरितिवाविग्रहे विपूर्वाज्जानातेर्बाहुलकात्कर्मणिभावेवाल्युटि लितीतिसूत्रेणजानातेराकारस्योदात्तत्वं तस्यचानादेशाकारेणाकःसवर्णेदीर्घइतिसूत्रेणैकादेशे एकादेशउदात्तेनोदात्तइत्येकादेशस्योदात्तत्वम् । अनादेशनकाराकारस्य त्वनुदात्तपदमेकवर्जमित्यनुदात्तत्वं पुनश्चोदात्तादनुदात्तस्य स्वरित इति तस्योदात्तात्परत्वेन स्वरितत्त्वमिति विज्ञानशब्दस्यस्वरितस्वरांतत्वं संप्रदायसिद्धं विज्ञानशब्दस्याचुप्रत्ययांतत्त्वे तु चित इतिसूत्रेण प्रकृतिप्रत्ययसमुदायस्यांतोदात्तत्वं स्यादिति चिति प्रत्यये सति प्रकृतिप्रत्ययसमुदायस्यांतो दात्तोवाच्य इति तदर्थः । २ संवित्कर्मतामंतरेणापरोक्षत्वात् ।

**यदन्तेवासिपंचास्यैर्निरस्ताभेदिवारणाः ॥**
**तं प्रणौमि नृसिंहाख्यं यतीन्द्रं परमं गुरुम् ॥ २ ॥**

एवमिष्टदेवतां नमस्कृत्य गुरुप्रसादात् परमात्मलाभ इत्यादिना गुरुप्रसादस्य विद्याप्राप्तिं प्रत्यंतरङ्गत्वप्रतीतेर्गुरवोऽवश्यं पूज्या इत्यभिप्रायेण परमगुरून् प्रथमं प्रणमति (यदिति) ।अंते समीपे वस्तुं शीलमेषां तेऽन्तेवासिनः शिष्यास्ते एव पंचास्याः सिंहाः यस्यांतेवासिपंचास्यैर्भेदवादिलक्षणा वारणाः गजा निरस्तास्तं यतीनां यत्नशीलानां परमहंस परिव्राजकानामिंद्रं नृसिंहसंज्ञकं परमं गुरुं प्रणौमि प्रकर्षण मनःकाय वाक् प्रणिधानेन नौमीत्यर्थः ॥ २ ॥

**श्रीमद्वेङ्कटनाथाख्यान् वेलांगुडिनिवासिनः ॥**
**जगद्गुरूनहं वन्दे सर्वतंत्रप्रवर्त्तकान् ॥ ३ ॥**

एवं परमगुरुं प्रणिपत्य साक्षाद्विद्यागुरुमभिवन्दते ( श्रीमद्वेङ्कटनाथाख्यानिति ) ॥ ३ ॥

**येन चिन्तामणौ टीका दशटीकाविभञ्जिनी ॥**
**तर्कचूडामणिर्नाम कृता विद्वन्मनोरमा ॥ ४ ॥**

चिकीर्षितग्रंथस्योपादेयता सिद्धयेस्वकीर्त्यनुवृत्तये च स्वस्य नानाविधग्रंथकर्तृत्वप्रदर्शनपुरस्सरं चिकीर्षितं प्रतिजानीते ( येनेति द्वाभ्याम् ) येन दशटीकाविभञ्जिनी विद्वन्मनोरमातर्कचूडामणिसंज्ञिका प्रसिद्धा चिंतामणौ टीका कृता तेन धर्मराजाध्वरींद्रसंज्ञकेन परिभाषा वितन्यते इति योजना ॥ ४ ॥

**तेन बोधाय मन्दानां वेदान्तार्थावलम्बिनी ॥**
**धर्मराजाध्वरीन्द्रेण परिभाषा वितन्यते ॥ ५ ॥**

प्रयोजनंनिर्दिशति (बोधायेति) मंदानां मंदबुद्धीनामलसानामिति वा

(बोधाय) तत्त्वज्ञानाय । यद्यपि बुद्धिमतामनलसानां सूत्रभाष्यादिकं बोधे साधनमस्त्येव तथापि मन्दानुग्राहकोयं ग्रंथ इति बोधनाय मंदानामित्युक्तं बोधयोग्यतां दर्शयितुं विशिनष्टि(वेदांतेति ) वेदांतानां श्रुतिमस्तकानामर्थानवलंबि तुं शीलमस्या अस्तीति तथा एवंचाऽस्यसमस्तवेदांततात्पर्यार्थ-प्रतिपादकस्येतरसंक्षिप्तग्रंथैरगतार्थता इति बोध्यम् ॥

**इह खलु धर्मार्थकाममोक्षाख्येषु चतुर्विधपुरुषार्थेषु मोक्ष एव परमपुरुषार्थः "न स पुनरावर्त्तते" इतिश्रुत्या तस्य नित्यत्वावगमात् । इतरेषां त्रयाणां प्रत्यक्षेण "तद्यथेह कर्मचितो लोकः क्षीयते । एवमेवामुत्र पुण्यचितो लोकः क्षीयते " इत्यादि श्रुत्याचानित्यत्वावगमात् स च ब्रह्मज्ञानादिति । ब्रह्म तज्ज्ञानं तत्प्रमाणं च सप्रपंचं निरूप्यते ॥**

एवं देवतागुरुप्रणतिपुरस्सरं ग्रंथकरणं प्रतिज्ञाय इदानीं करिष्यमाणग्रंथस्य शारीरकमीमांसया संगतिं द्योतयितुं ग्रंथप्रतिपाद्यं दर्शयति ( इहेत्यादिनिरूप्यते इत्यंतेन ) इहास्यां परिभाषायां खल्वितिवाक्यालंकारे ब्रह्मतज्ज्ञानं तत्प्रमाणंचसप्रपंचंनिरूप्यते । इति संबंधः कुत इत्यत आह ( धर्मेत्यादिना) यद्वा इहलोके वेदे चखलु प्रसिद्धं धर्मार्थकाममोक्षसंज्ञकेषु चतुर्विधपुरुषार्थेषु पुरुषैरर्थ्यमानेषु मोक्ष एव परम उत्कृष्टः ॥ पुरुषार्थः परमत्वं च निरतिशयत्वेसति क्षयशून्यत्वं तच्चमोक्षस्यैवास्तीत्यत उक्तम् । 'एवेति'मोक्षस्य परमपुरुषार्थत्वे श्रुतिबोधितं नित्यत्वं हेतुमाह ( नेति ) सब्रह्मज्ञानेन मुक्तः पुनर्भूयोनाऽऽवर्तते पुनः पुनर्जन्ममरणलक्षणां संसृतिं न भजते इति श्रुत्या मोक्षस्यैव [१] एवं मोक्षस्य परमपुरुषार्थत्वे हेतुमुक्त्वा धर्मादित्रयाणां तदभावे प्रत्यक्षेण यत्कृतकं तदनित्यमिति सामान्यतो दृष्टानुमानाऽनुगृहीतश्रुत्या चावगतंतेषामनित्यत्वं हेतुमाह ( इतरेषामिति ) इतरेषां धर्मादित्रयाणाम् ।

---

१ परमपुरुषार्थत्त्वाभावे ।

तद्यथा इहास्मिन् लोके कृष्यादिकर्मणा चितः संचितः सस्यादिलोकः कृतकत्वात् क्षीयते तद्वदेव अमुत्र परलोके पुण्यादृष्टेन संचितः स्वर्गादि-लोकः क्षीयते इति श्रुत्याचानित्यत्वावगमात् । तत्रार्थकामयोः प्रत्यक्षेण श्रुत्या च धर्मस्य तु श्रुत्या इति विभागः।यद्वा।प्रत्यक्षस्यकृतकत्त्वबोधनद्वारा धर्मानित्यत्वबोधनसामर्थ्यमित्यविरोधः।तथा च तेषामपि पुरुषार्थत्वादि-नानित्यत्वानुमानं पदार्थत्वादिना वह्नेरनौष्ण्यानुमानवद्बाधितविषयं 'अ पामसोममममृताअभूम' 'अक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवति' इत्याद्य श्रुतिश्चानुमानानुगृहीतोदाहृतश्रुतिविरोधेन प्रलयपर्यंतस्थायिफलाभिप्रा-या इतिभावः।एवंमोक्षस्य परमपुरुषार्थत्वं प्रसाध्य तरति 'शोकमात्मवित्।' ''तमेवविदित्वातिमृत्युमेतिनान्यःपंथाविद्यतेऽयनाय'' इत्यादिश्रुत्यातस्य साधनंब्रह्मज्ञानमित्याहसचेतिसचमोक्षः ब्रह्मज्ञानादेव इत्येवकारोनुषज्यते। यतो मोक्ष एव परमपुरुषार्थः सचब्रह्मज्ञानादेव यतश्चभवतीति हेतोर्मंदा-नांमुमुक्षूणामुपकाराय ब्रह्मतज्ज्ञानंतत्प्रमाणंचेति त्रितयं सपरिकरं निरू-प्यते इत्यर्थः ॥

**तत्र प्रमाकरणं प्रमाणम् ।तत्र स्मृतिव्यावृत्तं प्रमात्वं अनधिगताबाधितविषयज्ञानत्वम् । स्मृतिसाधारणं त्वबाधितविषयकज्ञानत्वम् । नीरूपस्यापि काल स्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपि पूर्व पूर्वज्ञानाविषयतत्तत्क्षणविशेषविषयकत्वेन न तत्रा व्याप्तिः ॥**

एवं ग्रंथाभिधेयं प्रदर्श्य ब्रह्मणस्तज्ज्ञानाधीननिरूपणत्वात् तस्य च त त्प्रमाणायत्तनिरूपणत्वात्।प्रथमं प्रमाणनिरूपणमारभते ( तत्रेत्यादिना ) तत्रतेषुब्रह्मतज्ज्ञानतत्प्रमाणेषु प्रमायाः करणं प्रमाणं करणत्वंचाऽसाधा-रणकारणत्वे सति व्यापारवत्त्वं तेनपरामर्शादौ सव्यापारे मनसिचनाति-प्रसंगः प्रमायालक्षणंकिमित्याकांक्षायां तल्लक्षणमाह (तत्रेति)तत्र प्रमाकर-

णमित्यत्र ( स्मृतिव्यावृत्तं प्रमात्वमिति ) तथाचतस्याअलक्षत्वान्नतत्राव्याप्तिरिति भावः । स्मृतावतिव्याप्तिवारणायानधिगतेति विषये विशेषणं शुक्तिरूप्यज्ञानादौ तन्निरासाय अबाधितेति ज्ञानपदं तु स्वरूपकथनार्थ इच्छादीनां आद्यविशेषणेनैवनिरासात्।यद्वाचक्षुरादिष्वतिव्याप्तिवारणार्थं ज्ञानेति । तेषामपिफलद्वाराघटादिविषयत्वाभ्युपगमात् ज्ञप्तिर्ज्ञानं तेननतत्करणेज्ञानेऽतिव्याप्तिः, स्मृतावपिप्रमाण्यव्यवहारदर्शनादाह ( स्मृतीति ) इच्छादिव्यावृत्त्यर्थंज्ञानपदम्।नन्वयं घटअयं घटःइत्येवमादिरूपधारावाहिकबुद्धिस्थले द्वितीयादिज्ञानानामधिगतविषयत्वात् प्रथमलक्षणं तत्राऽव्याप्तमितिचेत्तत्राह ( नीरूपस्येति ) इदानींघटोवर्तते इत्येवंरूपानन्यथासिद्धप्रतीतिवलेन महत्त्वसमानाधिकरणोद्भूतरूपवत्त्वस्य कालातिरिक्तद्रव्यचाक्षुषताप्रयोजकत्वकल्पनात् । प्रयोजकानुसारेण प्रतीतिकल्पनेतु नीरूपस्य रूपस्याऽचाक्षुषत्वापत्तेर्नीरूपस्यापि कालस्य प्रत्यक्षप्रमाणजन्यानुभवविषयत्वस्वीकारेण धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञानाविषयतत्तदुत्तरक्षणविशेषविषयकत्वेनाऽधिगतविषयत्वाभावान्नतत्रधारावाहिकबुद्धिस्थले व्याप्तिरित्यर्थः।नचैवं शाब्दधारावाहिकद्वितीयादिज्ञानेष्वव्याप्तिरितिशंक्यं आकांक्षायाः पदार्थज्ञानस्यचाभावेन तत्र धारावाहिकबुद्धेरेवासिद्धेः अत एव नधारावाहिकाद्वितीयाद्यनुमितावव्याप्तिर्द्वितीयानुमितिक्षणे प्रथमानुमितेर्विनष्टत्वेन तस्या अनधिगतविषयत्वात् ॥

किंच सिद्धान्ते धारावाहिकबुद्धिस्थले न ज्ञानभेदः, किन्तु यावद्धटस्फुरणं तावत् घटाकारान्तःकरण वृत्तिरेकैव, नतुनाना, वृत्तेः स्वविरोधिवृत्त्युत्पत्तिपर्यंतं स्थायित्वाभ्युपगमात् । तथा च तत्प्रतिफलित चैतन्यरूपं घटादिज्ञानमपि तत्र तावत्कालीनमेकमेवेति नाव्याप्तिशंकाऽपि ॥

---

१करणव्युत्पत्त्या ज्ञानशब्दवाच्यचक्षुरादौ । २ आदिना कृति संस्कारादीनां संग्रहः ।

नन्वेवं तर्ह्याकाशेबलाकेतिप्रतीतिबलादाकाशस्यापि प्रत्यक्षत्वं स्यान्न चेष्टापत्तिस्तत्सद्भावे शब्दलिंगकानुमानप्रमाणानुसरणाऽनुपपत्तेः 'अप्रत्यक्षेह्याकाशे बालास्तलमलिनताद्यध्यस्यन्ति'' इतिभाष्यकृद्वचनविरोधाच्च नीरूपस्य रूपस्य चाक्षुषत्वं त्वद्रव्यत्वादविरुद्धम् ॥ तस्मात्सुरभिचंदनमित्यत्र यथासौरभ्यांशे परोक्षत्वं तद्वत्कालांशे परोक्षत्वमेवाभ्युपेयं नचाक्षुषत्वम्।तथाचनीरूपस्यतत्तत्क्षणस्याऽचाक्षुषत्वात् धारावाहिकबुद्धावव्याप्तिस्तदवस्थेत्यरुचेराह ( किंचेति ) ननुकुतस्तत्रज्ञानभेदोनास्तीतिपृच्छति ( किंत्विति ) यावत्कालमस्ति प्रकाशत इति घटस्यस्फुरणं तावत्कालं लाघवेन घटाकारांतःकरणवृत्तेरेकत्वादित्युत्तरमाह ( यावदिति) एवकारव्यावर्त्यमाह ( नत्विति ) गौरवादिति भाव । नन्वतिलाघवात्सुषुप्तिपर्यन्तमेकैव वृत्तिः कुतो नांगीक्रियते इत्याशंक्य स्वविरोधिवृत्त्युत्पत्तिकाले तत्स्थितेरसंभवेन तस्यास्तत्पर्यंतस्थायित्वाभ्युपगम इत्याहुः ( वृत्तेरिति ) प्रकृतवृत्तेरित्यर्थः ॥ ननु ज्ञानभेदनिरासार्थं वृत्तेरेकत्ववर्णनमयुक्तं सिद्धांते चैतन्यस्य ज्ञानत्वादित्याशंक्यवृत्तिप्रतिफलितस्यैतस्य घटादिज्ञानत्वेन तदेकत्वसिद्ध्या तत्प्रतिफलितचैतन्यरूपघटादिज्ञानस्याप्येकत्वं सिद्ध्यतीत्याशयेनाह। तथाचेति । वृत्तिभेदाभाव सिद्धे सति तत्र धारा वाहिकस्थले यावत्कालीनं घटस्फुरण तावत्कालीनमेकमेवेति हेतोरव्याप्तिशंकापि नास्ति।नन्वेवमपिविरोधिवृत्त्युत्तरं पुनर्जायमानस्य घटादिज्ञानस्याधिगतविषयत्वेन तत्राव्याप्तिरितिचेत्,न,अनधिगतविषयपदेन स्वाऽन्यूनविषयकानुभवाऽजन्यत्वस्य विवक्षितत्वात् ॥

ननु सिद्धान्ते घटादेर्मिथ्यात्वेन बाधितत्वात् तज्ज्ञानं कथंप्रमाणम् । उच्यते । ब्रह्मसाक्षात्कारानन्तरं हि घटादीनांबाधः "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इतिश्रुतेः । न तु संसारदशायां बाधः "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति"

इति श्रुतेः । तथाचाबाधितपदेन संसारदशायामबाधितत्त्वं विवक्षितमिति न घटादिप्रमायामव्याप्तिः तदुक्तम्—

"देहात्मप्रत्ययो यद्वत् प्रमाणत्वेन कल्पितः ।
लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्" ॥१॥

ब्रह्मसाक्षात्कारपर्यन्तमित्यर्थः । लौकिकमिति घटादिज्ञानमित्यर्थः ॥

ननु सिद्धांते घटादेः शुक्तिरूप्यवन्मिथ्यात्वेन बाधितत्वात् । तज्ज्ञानस्याऽप्रमात्वेन लक्ष्यत्वाभावात्तत्राऽव्याप्तिशंका तन्निरासावनुपपन्नावित्याशयेन शंकते ( नन्विति ) कथंप्रमाणं प्रमात्वेन लक्ष्यं न भवतीत्यर्थः ॥ समाधानंप्रतिजानीते ( उच्यतेइति ) किं ब्रह्मसाक्षात्कारानंतरं घटादीनां बाधः उत शुक्तिरूप्यवत् संसारदशायामिति विकल्प्याद्यमंगीकरोति ( ब्रह्मेति ) तत्र श्रुतिं प्रमाणयति(यत्रेति) यत्र यस्यां तत्त्वसाक्षात्कारदशायाम् । अज्ञानावस्थावैलक्षण्यद्योतकस्तुशब्दः । अस्य ब्रह्मसाक्षात्कारवतः सर्वमात्मैवाभूत् तत्तस्यां दशायां केन करणेन कं विषयं पश्येत्सर्वस्यापि तत्त्वज्ञानेन बाधितत्वादित्यर्थः । द्वितीयं निरस्यति ( नत्विति ) अत्रापि श्रुतिं प्रमाणयति ( यत्रेति ) यत्र यस्यां संसारदशायां द्वैतमिव भवति तत् तस्यामितरःसन्नितरं पश्यतीत्यर्थः । तथाच संसारदशायांघटादेरबाधितत्वेन तज्ज्ञानस्य लक्ष्यत्वात्तत्राऽव्याप्तिशंकातन्निरासावपेक्षितावेवेति भावः।नन्वेवं सतिघटादेःकालत्रयेऽबाधितत्वाभावादुक्तलक्षणं तत्राऽव्याप्तमिति चेत्तत्राह ( तथाचेति ) संसारदशायामाबाधितत्वेन घटादिप्रमायाःलक्ष्यत्वे सति तत्राव्याप्तिनिरासायाबाधितपदेन संसारदशायामेवाऽबाधितत्वंविवक्षितमिति न तत्प्रमायामव्याप्तिरित्यर्थः।स्वोक्तं घटादिज्ञानप्रामाण्यमभियुक्तवचनेन द्रढयितुमाह ( तदुक्तमिति ) आत्मनिश्चयस्य संसारदशायामपि सत्त्वादाह ( ब्रह्मेति ) लौकिकंप्रत्यक्षजन्यज्ञानमात्रमिति

भ्रमव्यवच्छेदायाह ( घटादीति ) आ आत्मनिश्चयात् इत्युक्तत्वेन ब्रह्मातिरिक्तवस्तुज्ञानं सर्वं तेन ग्राह्यमित्यर्थः। तेन स्वर्गेष्टसाधनतादिज्ञानस्यालौकिकत्वेपि न क्षतिः ॥

**तानि च प्रमाणानि षट्, प्रत्यक्षानुमानोपमानागमार्थापत्त्यनुपलब्धिभेदात्। तत्र प्रत्यक्षप्रमायाः करणं प्रत्यक्षप्रमाणम्। प्रत्यक्षप्रमा चात्र चैतन्यमेव "यत्साक्षादपरोक्षाद्ब्रह्म" इति श्रुतेः। अपरोक्षादित्यस्यापरोक्षमित्यर्थः। ननु चैतन्यमनादि तत्कथं चक्षुरादेस्तत्करणत्वेन प्रमाणत्वमिति। उच्यते। चैतन्यस्यानादित्वेपि तदभिव्यञ्जकान्तःकरणवृत्तिरिन्द्रियसन्निकर्षादिना जायते। इति वृत्तिविशिष्टं चैतन्यमादिमदित्युच्यते। ज्ञानावच्छेदकत्वाच्च वृत्तौज्ञानत्वोपचारः। तदुक्तं विवरणे—"अंतःकरणवृत्तौज्ञानत्वोपचारात् इति" ॥**

एवं लक्षणलक्षितप्रमाकरणं प्रमाणं कतिविधमित्यपेक्षायामाह (तानीति) प्रत्यक्षमेकमिति चार्वाकः, प्रत्यक्षानुमाने इति कणादसुगतमतानुयायिनः, शब्देनसह त्रीणीति सांख्याः,प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति नैयायिकाः,अर्थापत्त्यासह पंचेति प्रभाकरास्तेषां निराकरणायोक्तं षडिति, तानि कानीत्यपेक्षायामाह ( प्रत्यक्षेति ) तत्रप्रत्यक्षस्य सर्वप्रमाणोपजीव्यत्वाज्ज्येष्ठत्वाच्च तन्निरूपणमेव प्रथममारभते ( तत्रेति ) तेषु प्रमाणेष्वित्यथः।अनुमानादावतिव्याप्तिवारणाय प्रत्यक्षेति।शुक्तिरूप्यज्ञानादिसाधने तन्निरासाय प्रमापदं।प्रत्यक्षप्रमात्वमिद्रियजन्यज्ञानत्वं ज्ञानाजन्यज्ञानत्वं वा ज्ञानाकरणकज्ञानत्वं वा। नाद्यः, सिद्धांते मनसोऽनिंद्रियत्वेन सुखादिप्रत्यक्षेऽव्योपकत्वात्। नद्वितीयः, मतांतरे प्रत्यक्षज्ञान-

---

१ अवृत्तित्वापातात्।

मात्रस्यैवेश्वरज्ञानजन्यतया तत्राव्यापकतापातात् । नापितृतीयः, अनुभवस्य संस्कारे उपक्षीणतया स्मृत्यकरणत्वेन तत्रातिव्याप्तेः संस्काद्वाराकरणत्वेप्रत्यभिज्ञायामव्याप्तेरित्येवं प्रत्यक्षप्रमायादुरुपपादत्वात्सूपपादःपक्षः आश्रयणीय इत्यभिप्रायवानाह ( प्रत्यक्षप्रमाचेति ) तत्र श्रुतिं प्रमाणयति ( यदिति ) प्रमाणद्वारकप्रत्यक्षत्वव्यावृत्त्यर्थं साक्षात्पदं अपरोक्षप्रमाणाद्ब्रह्मणः साक्षात्वमिति भ्रमनिरासायाह ( परोक्षादिति ) ननु चैतन्यस्याऽनादित्वेन करणाकांक्षाशून्यत्वात् चक्षुरादेस्तस्य करणत्वेन प्रमाणत्वं कथमिति शंकते ( नन्विति ) तत् तस्मात् चैतन्यस्यानादित्वेऽपि चैतन्याभिव्यंजकांतःकरणवृत्तेरिंद्रियसन्निकर्षादिना जन्यत्वेन तद्विशिष्टचैतन्यस्यादिमत्तायाः सुवचत्वेन चक्षुरादेस्तत्करणत्वसंभवेन प्रामाण्योपपत्तेर्मैवमिति परिहरति ( उच्यते इति ) अवशिष्टचैतन्यं प्रतिचक्षुरादेरकरणत्वं त्विष्टमेव तस्य स्वप्रकाशत्वेन स्वात्मनि प्रमाणव्यापारानपेक्षत्वादितिभावः।ननु वृत्तिरेव प्रत्यक्षप्रमा किं नस्यात्।तस्यां ज्ञानव्यवहारोपलब्धेः स्वरूपेणेंद्रियजन्यत्वोपपत्तेश्च इत्याशंक्य सत्यंज्ञानमित्यादिश्रुत्या चैतन्यस्यैव मुख्यज्ञानत्वावगमात् । वृत्तेश्च जडांतःकरणधर्मत्वेन जडत्वान्नतस्याः प्रत्यक्षप्रमात्वमपितु तस्यां चैतन्यरूपज्ञानावच्छेदकत्वात्तत्वोपचार इत्याशयेनाह ( ज्ञानेति ) नन्विदं केनाचार्येणोक्तमित्याकांक्षायामाह ( तदुक्तमिति ) तथाचप्रकाशात्मसंज्ञकैराचार्यैर्विवरणाख्ये ग्रंथेऽभिहितत्वान्नायमपसिद्धांत इति भावः ॥

ननु निरवयवस्यान्तःकरणस्य परिणामात्मिका वृत्तिः कथम् । इत्थम् । न तावदन्तःकरणं निरवयवं सादिद्रव्यत्वेन सावयवत्वात्सादित्वं च "तन्मनोऽसृजत" इत्यादिश्रुतेःवृत्तिरूपज्ञानस्यमनोधर्मत्वे च "कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिर

**धृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इतिश्रुतिर्मानम् । धीशब्देनवृत्तिरूपज्ञानाभिधानात् । अत एव कामादेरपि मनोधर्मत्वम् ॥**

नन्वंतःकरणं न परिणामि निरवयवत्वादाकाशवदित्यनुमानादंतःकरणस्य परिणामात्मिकायावृत्तेरेवासंभवेन तद्वृत्तिविशिष्टंचैतन्यं ज्ञानमितिवक्तुमशक्यत्वेनाऽऽत्मभिन्नमेवज्ञानं तच्चेन्द्रियजन्यत्वात् प्रत्यक्षमितिनैयायिकः शंकते ( नन्विति ) कथं कथमपि नास्तीत्यर्थः । अंतःकरणं निरवयवं न भवति सादिद्रव्यत्वात् घटवदित्यनुमानेन भवदुक्तहेतोरसिद्धत्वेन सादिद्रव्यत्वहेतुनासिद्धेन सावयवत्वेन तत्परिणामित्वानुमानात्तत्परिणामात्मिकायाः वृत्तेः संभवात्तद्विशिष्टमात्मचैतन्यमेव ज्ञानं नतु तद्भिन्नमित्याशयवान् परिहराति ( इत्थमिति ) आत्मादौ व्यभिचारनिरासाय'सादीति'।रूपादौ तद्वारणाय'द्रव्यत्वेति'नन्वंतःकरणस्य सादित्वेप्रमाणाभावाद्विशेषणासिद्धो हेतुरितिचेत्तत्सादित्वेभगवत्याःश्रुतेःप्रमाणत्वान्नेत्याह ( सादित्वंचेति ) तत् ब्रह्ममनोन्तःकरणमसृजदित्यर्थः। एवमन्तःकरणस्य सादित्वे प्रमाणमुक्त्वा तत्परिणामित्वे न केवलमनुमानमेव प्रमाणमपितु भगवतीश्रुतिरपीत्याह ( वृत्तिरूपज्ञानस्येति)चकारादनुमानसमुच्चयः।काम इच्छा, विचिकित्सा संशयः,ननु श्रुतौ ज्ञानस्यानुक्तत्वात्तस्यमनोधर्मत्वे श्रुतेःकथंमानतेतिचेत्तत्राह ( धीशब्देनेति ) ननु धीशब्दाऽभिहितज्ञानमंतःकरणोपादानकं न भवति मानसप्रत्यक्षत्वात् कामनादिवत्,नच श्रुतिविरोधः, मनोजन्यत्वपरतयापि तदुपपत्तेरित्याशंक्य मृद्घटइत्यादिवत्सर्वं मन एवेति सामानाधिकरण्यश्रुतेरनुपादानपरत्वानुपपत्त्या कामादेरपि तदुपादानकत्वात्।दृष्टांतस्य साध्यविकलत्वेन ज्ञानमंतःकरणोपादानकमेवेत्याशयेनाह ( अतएवेति ) सामानाधिकरण्यश्रुतेरेवेत्यर्थः ॥ ११ ॥

**ननु कामादेरन्तःकरणधर्मत्वेऽहमिच्छाम्यहंजानाम्यहं बिभेमीत्याद्यनुभव आत्मधर्मत्वमवगाहमानः कथ**

सुपपद्यते । उच्यते । अयःपिंडस्य दग्धृत्वाभावेपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासात् यथा अयोदह तीति व्यवहारस्तथा सुखाद्याकारपरिणाम्यन्तःकर णैक्याध्यासात् अहंसुखीदुःखीत्यादिव्यवहारः ॥

नन्वहमिच्छाम्यहं जानामीत्याद्यनुभवस्य कामादेरात्मधर्मत्वेनावगाहमानस्य विरोधात्तेषामन्तःकरणधर्मत्वं नोपपद्यते, श्रुतिस्तु आयुर्वैघृतमितिवत् हेतावुपचरितार्थेति शंकते ( नन्विति ) कामादेरन्तःकरणधर्मत्वमेवोक्तव्यवहारस्तु सुखाद्याकारपरिणाम्यन्तःकरणैक्याध्यासादुपपद्यते यथायःपिण्डस्यदग्धृत्वाभावेपि दग्धृत्वाश्रयवह्नितादात्म्याध्यासादयो दहतीतिव्यवहारस्तद्वदिति समाधत्ते ( उच्यते इति ) नन्वस्तुवह्नच्ययःपिंडयोरुभयोरपिप्रत्यक्ष विषयत्वन तादात्म्याध्यासादुक्तव्यवहारःआत्मान्तःकरणयोस्तुप्रत्यक्षविषयतदविषययोस्तत्त्वाभावात्कथमुदाहृतव्यवहारः ॥

नन्वन्तःकरणस्येन्द्रियतयाऽतीन्द्रियत्वात्कथमहमि ति प्रत्यक्षविषयतेति । उच्यते । नतावदन्तःकर णमिन्द्रियमित्यत्र मानमस्ति "मनः षष्ठानीन्द्रि याणि"इतिभगवद्गीतावचनं प्रमाणमिति चेत्,न,अनि न्द्रियेणापि मनसा षट्त्वसंख्यापूरणाविरोधात् । नही न्द्रियगतसंख्यापूरणमिन्द्रियेणैवेतिनियमः "यजमान पंचमा इडांभक्षयंति" इत्यत्रऋत्विग्गतपंचत्वसं ख्याया अनृत्विजापियजमानेन पूरणदर्शनात् ॥ ११ ॥

नचान्तःकरणस्य प्रत्यक्षविषयता तस्येंद्रियतयातीन्द्रियत्वाच्चक्षुरादीन्द्रियवदिति शंकते ( नन्विति ) अन्तःकरणस्येन्द्रियत्वे प्रमाणाभावादतीन्द्रियत्वासिद्ध्या प्रत्यक्षविषयताऽभावासिद्धिरित्याशयेन परिहराति (नेति ) षष्ठस्य मनसइन्द्रियत्वप्रतिपादकस्य भगवद्वाक्यस्य परमप्रमाणस्य

सत्त्वान्मानंनास्तीत्ययुक्तमितिचोदयति ( मनइति) अनिन्द्रियेणापि मन-सेन्द्रियगतषट्त्वसंख्यापूरणाविरोधेनोदाहृतभगवद्वचसस्तदिन्द्रियत्वे प्रमाणत्वाभावान्मैवमित्याह ( नेति ) तथाच श्रुतेरनुपलंभात् स्मृतेश्च तदिंद्रियत्वाबोधकत्वान्नमानमस्तीतिसुस्थम्।नच मन इन्द्रियं इन्द्रियगतसंख्यापूरकत्वादित्यनुमानं मानमितिशंक्यं, अनिंद्रियेणापि तद्गतसंख्यापूरणाविरोधेनाप्रयोजकत्वात् । किंचोक्तानुमाने यदिन्द्रियगतसंख्यापूरकं तदिंद्रियमिति विशेषव्याप्तिर्मूलमुतयद्यद्गतसंख्यापूरकं तत्तज्जातीयं यथा "पशौप्रतिप्रस्थातृषष्ठा ऋत्विज" इत्यत्र ऋत्विक्गतसंख्यापूरकऋत्विग्जातीय इति सामान्यव्याप्तिरितिविकल्प्य नोभयमित्याशयेनाह । (नहीति) दृष्टांताभावेनाद्यनिरासमभिप्रेत्यद्वितीयोऽव्यभिचारान्नेत्याशयेनहेतुमाह । ( यजमानेति ) तथाच यजमाने ऋत्विगात्तसंख्यापूरकत्वं वर्त्तते तज्जातीयत्वं नास्तीति व्यभिचार इति भावः ॥

**"वेदानध्यापयामास महाभारतपंचमान्" इत्यत्रवेदगतपंचत्वसंख्याया अवेदेनापिमहाभारतेन पूरणदर्शनात् । "इन्द्रियेभ्यः पराह्यर्था ह्यर्थेभ्यश्चपरंमनः" इत्यादिश्रुत्यामनसोऽनिन्द्रियत्वावगमाच्च । नचैवं मनसोनिन्द्रियत्वेसुखादिप्रत्यक्षस्य साक्षात्त्वं नस्यादिन्द्रियाजन्यत्वादितिवाच्यम् । नहीन्द्रियजन्यत्वेन ज्ञानस्यसाक्षात्त्वम् । अनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्ते, ईश्वरज्ञानस्यानिन्द्रियजन्यस्यसाक्षात्त्वानापत्तेश्च ॥**

एवं श्रुतौ व्यभिचारं प्रदर्श्य स्मृतावपि तं दर्शयति । ( वेदानिति अवेदनापीति) पौरुषेयस्येतिहासत्वेन प्रसिद्धस्य वेदत्वाप्रसिद्धेरिति भावः। यथा "नक्षत्राणामहंशशी" इति वचनंनशशिनो नक्षत्रतायां प्रमाणं, तथं-

द्रियाणां मनश्चास्मीतिभगवद्वाक्यमपि मनस इन्द्रियत्वेन प्रमाणमित्यपिज्ञेयम्। ननु मनस इन्द्रियत्वे बाधकाभावात् किमर्थमेवमुच्यते इत्याशंकाव्यवच्छेदायेहत्वंतरमाह (इन्द्रियेभ्य इति) इन्द्रियपरार्थेभ्यः परत्वप्रतिपादनेन मनसोऽनिंद्रियत्वबोधकयेत्यर्थः। ननु मनोव्यतिरिक्तेन्द्रियेभ्यः पराह्यर्था इति व्याख्यानसंभवेन न तस्य तत्व बाधकमितिशंकानिरासाय "एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणिच" इत्येवमादिश्रुतिरादिपदेन संगृहीता तथाचादिपदोपात्तश्रुत्येकवाक्यतामापन्नेयं श्रुतिरिंद्रियपरेभ्यः परत्वं मनसः प्रतिपादयंती। तस्यानिंद्रियत्वं बोधयतीतिभावः। ननु मनसोऽनिंद्रियत्वे प्रत्यक्षस्येंद्रियजन्यत्वादनिंद्रियमनोजन्यसुखाद्युपलब्धेः प्रत्यक्षत्वं न स्यात्तस्मात्तत्प्रत्यक्षत्वसिद्धये तस्येंद्रियत्वमवश्यमभ्युपेयमित्याशंक्य निराकरोति ( नचेति ) हि यस्मादिंद्रियजन्यत्वं ज्ञानस्य प्रत्यक्षत्वे प्रयोजकं न भवति तस्मादिंद्रियाजन्यत्वेन सुखाद्युपलब्धेरप्रत्यक्षत्वं स्यादिति नच वाच्यमित्यर्थः । तस्य तत्प्रयोजकत्वे किम्बाधकमितिचेत्तत्राह ( अनुमित्यादेरिति ) उक्तप्रयोजकानुसारेण सुखादिज्ञानस्य प्रत्यक्षत्वसिद्धये मनसोपींद्रियत्वाश्रयणान्मनोजन्यानुमित्यादेः प्रत्यक्षत्वापत्तिर्बाधिकेत्यर्थः। नन्विंद्रियत्वेनेंद्रियजन्यत्वमेव तत्प्रयोजकं अनुमित्यादेश्च मनस्त्वेन तज्जन्यत्वान्नातिप्रसंग इत्यत आह । ( ईश्वरज्ञानस्येति )॥

**सिद्धान्ते प्रत्यक्षत्वप्रयोजकं किमितिचेत् किंज्ञानगतस्य प्रत्यक्षत्वस्य प्रयोजकं पृच्छसि किंवाविषयगतस्य। आद्येप्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभेद इतिब्रूमः । तथाहि। त्रिविधंचैतन्यं प्रमातृचैतन्यं प्रमाणचैतन्यं विषयचैतन्यं चेति। तत्रघटाद्यवच्छिन्नचैतन्यंविषयचैतन्यम्, अन्तःकरणवृत्त्यवच्छिन्नं चैतन्यं प्रमाणचैतन्यम्। अन्तःकरणावच्छिन्नं चैतन्यं प्रमातृचैतन्यम् ॥**

एवं निरस्तस्वाभिमतप्रत्यक्षत्वप्रयोजकः सिद्धांतेपि प्रयोजकांतरमप श्यन्नाक्षिपति ( सिद्धांत इति किं ) न किमपीत्यर्थः। सिद्धांते तत्प्रयो-जकस्य सत्त्वादाक्षेपप्रतिक्षेपाय पृच्छति ( किमिति ) ज्ञानगतप्रत्यक्षत्व-स्य तत्पृच्छामीतिचेत्तत्राह ( आद्यइति ) नन्वद्वैतवादिनस्तव कथं चैत-न्यभेदो येन प्रमाणचैतन्यस्यविषयचैतन्येनाभेदस्य ज्ञानगतप्रत्यक्षत्वप्रयो-जकत्वं भवेदित्याशंक्यौपाधिकं भेदमुपपादयति ( तथाहीति ) ॥

**तत्र यथातडागोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्यतद्वदेवचतुःकोणाद्याकारं भवति तथा तैजसमन्तःकरणमपिचक्षुरादिद्वारानिर्गत्य घटादि विषयदेशं गत्वा घटादिविषयाकारेण परिणमते सएवपरिणामो वृत्तिरित्युच्यते। अनुमित्यादिस्थले तु नान्तःकरणस्य वह्न्यादिदेशगमनं वह्न्यादेश्चक्षुराद्यसंनिकर्षात्। तथाचायं घटः इत्यादिप्रत्यक्षस्थले घटादेस्तदाकारवृत्तेश्च बहिरेकत्रदेशे समवधानात्तदुभयावच्छिन्नं चैतन्यमेकमेव ॥**

नन्वंतःकरणस्यवृत्तेरेवासंभवात् तदवच्छिन्नंचैतन्यं प्रमाणचैतन्य-मित्युक्तिरयुक्ता, नह्यणुपरिमाणस्य तस्य वृत्तिः संभवति। नचतत्प-रम महत्परिमाणं प्राणशक्त्याश्रयस्य तस्यैवोत्क्रांतिगत्यादिश्रवणात्। नापिमध्यमपरिमाणं तथात्वेदेहवन्मंदगतित्वेन झटितिविषयप्रतिभासा-नुपपत्तेः। आंतरस्य तस्य बहिर्निर्गमनानुपपत्तेश्चेत्याशंक्यांतःकरणस्या-णुत्वे देहव्यापिसुखाद्युपलब्ध्यनुपपत्तिं तस्य प्राणशक्त्याश्रयस्य दूरव-र्तिध्रुवादिपर्यंतगमने तदवच्छिन्नजीवस्यापि गतत्वेन देहस्य निर्जीवत्वा-पत्तिंचाभिप्रेत्य तस्यमध्यमपरिमाणत्वमाश्रित्योत्तरमाह ( तत्रेति ) तेषुत्रिषूपाधिष्वित्यर्थः। तैजसमित्यनेनातिस्वच्छविरलतैजसद्रव्यतयास वितृकिरणवच्छीघ्रप्रसरोपपत्तिर्बोधिता। ननु अनुमित्यादिस्थलेप्यन्तः

करणस्य वन्ह्यादिदेशगमनेन वृत्त्यवच्छिन्नस्य तदवच्छिन्नाभेदादुक्तप्रयोजकं तत्रातिव्याप्तमित्याशंक्याह ( अनुमितीति ) तत्र हेतुमाह । ( वन्ह्यादेरिति ) ननु प्रत्यक्षस्थलेपि वृत्तिघटयोर्भेदाद्भिन्नोपाधिकयोः प्रमाणप्रमेयचैतन्ययोर्भेदावश्यंभावादुक्तप्रयोजकं तत्राव्याप्तमित्यत आह ( तथाचेति ) चक्षुरादिसंनिकर्षस्थले मनो निर्गमने सिद्धे सतीत्यर्थः । समवधानात्सहावस्थानात् तदुभयावच्छिन्नं घटादितदाकारवृत्त्युपहितम् ॥

विभाजकयोरप्यन्तःकरणवृत्तिघटादिविषययोरेकदेशस्थत्वेनभेदाजनकत्वात्। अतएव मठान्तर्वर्तिघटावच्छिन्नाकाशोनमठावच्छिन्नाकाशाद्भिद्यते । तथा चायं घट इति घटप्रत्यक्षस्थले घटाकारवृत्तेर्घटसंयोगितया घटावच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्याभिन्नतया तत्र घटज्ञानस्य घटांशे प्रत्यक्षत्वम् । सुखाद्यवच्छिन्नचैतन्यस्य तद्वृत्त्यवच्छिन्नचैतन्यस्यच नियमेनैकदेशस्थितोपाधिद्वयावच्छिन्नत्वात् नियमेनाहंसुखीत्यादिज्ञानस्य प्रत्यक्षत्वम् । नन्वेवं स्ववृत्तिसुखादिस्मरणस्यापिसुखाद्यंशे प्रत्यक्षत्वापत्तिरितिचेन्न, तत्र स्मर्यमाणसुखस्यातीतत्वेन स्मृतिरूपान्तःकरणवृत्तेर्वर्तमानत्वेन तत्रोपाध्योर्भिन्नकालीनतया तत्तदवच्छिन्नचैतन्ययोर्भेदात् । उपाध्योरेकदेशस्थत्वेसत्येककालीनत्वस्यैवोपधेयाभेदप्रयोजकत्वात् ॥

ननु विशेषणयोरिवोपाध्योरेकदेशस्थितत्वेपि भेदजनकत्वात्कथमुप-

हितचैतन्यैकत्वमित्याशंक्योपाध्योर्भिन्नदेशस्थत्वेनैवभेदजनकत्वं, नतुवि-
शेषणयोरिवस्वरूपेणापीत्याशयेनाह। ( विभाजकयोरपीति ) भिन्नदे-
शस्थत्त्वेनोपधेयभेदप्रयोजकयोरपीत्यर्थः। ननुलाघवात्स्वरूपेणैवभेदजन
कत्वमुपाध्योरप्यस्त्वत आह ( अतएवेति ) एकदेशस्थितत्वेनोपा-
ध्योर्भेदाजनकत्वादेवेत्यर्थः।एवं च प्रामाणिकत्वाद्गौरवंनदोषावहमितिभावः
फलितमाह ( तथाचेति ) एकदेशस्थितत्वेनोपाध्योर्भेदाजनकत्वेसिद्धेसती
त्यर्थः।(तद्वृत्त्यवच्छिन्नचैतस्य)घटवृत्त्यवच्छिन्नचैतन्यस्य(तत्र)अयंघट इति
प्रत्यक्षस्थले ननु चक्षुराद्यसन्निकृष्टेसुखादौतद्वृत्त्यनुदयात्कथंतदंशेप्रत्यक्ष-
त्वमित्याशंक्य तस्यांतरत्वेन चक्षुरादिसंनिकर्षानपेक्षणादित्याशयेनाह
( सुखादीति ) तत्सुखादि एकस्मिन्नन्तःकरणरूपे देशे स्थितं यदुपा-
धिद्वयं सुखादितद्वृत्तिरूपंतदवच्छिन्नत्वात् ( प्रत्यक्षत्वमिति ) सुखाद्यं
शेइतिशेषः। नन्वेवमुपाध्योरेकदेशस्थत्वेन भेदाजनकत्वेऽहंपूर्वंसुखी
त्यादेः स्ववृत्तिसुखादिस्मरणस्यापि सुखाद्यंशे प्रत्यक्षत्वं स्यादितिशंकते
( नन्विति ) नकेवलमुपाध्योरेकदेशस्थत्वमात्रमुपहिताभेदप्रयोजकम
पित्वेककालीनत्वमपीति नस्मृतावतिव्याप्तिस्तत्रोपाध्योर्भिन्नकालीन-
त्वादिति परिहरति ( नेति ). तत्रस्ववृत्तिसुखादिस्मरणे तत्र-
तयोःसुखतद्वृत्तिरूपयोरुपाध्योः तत्तदवच्छिन्नचैतन्ययोःसुखतद्वृत्त्यव-
च्छिन्नचैतन्ययोः ( उपधेयेति ) उपहितचैतन्येत्यर्थः॥

यदिचैकदेशस्थत्वमात्रमुपधेयाभेदप्रयोजकं तदाहं
पूर्वं सुखीत्यादिस्मृतावतिव्याप्तिवारणाय वर्तमानत्वं
विषयविशेषणंदेयं, नन्वेवमपि स्वकीयधर्माधर्मौ वर्त्त
मानौ यदाशब्दादिनाज्ञायेते तदातादृशशाब्दज्ञाना
दावतिव्याप्तिः। तत्र धर्माद्यवच्छिन्नतद्वृत्त्यवच्छिन्नचै
तन्ययोरेकत्वादितिचेन्न योग्यत्वस्यापिविषयविशेष

१ अन्तःकरणम्।

**णत्वात् । अन्तःकरणधर्मत्वाविशेषेपि किंचिदयोग्यं किंचिद्योग्यमित्यत्र फलबलकल्प्यः स्वभाव एव शरणं, अन्यथान्यायमतेप्यात्मधर्मत्वाविशेषात् सुखादिवद्धर्मादेरपिप्रत्यक्षत्वापत्तिर्दुर्वारा ॥**

नन्वेवं तर्हि भिन्नकालीनयोरेकदेशस्थयोर्घटमठयोर्भेदकत्वापत्तिरुपधेयाभेदसमये उपाध्योरेककालत्त्वविवक्षायांत्वन्योन्याश्रयइत्यरुचेराह ( यदीति ) उपाध्योरित्यनुषज्यते प्रमाणचैतन्यस्य विषयचैतन्याभेद इत्यत्रवर्त्तमानत्वं विषयविशेषणं देयं, तथाचस्मर्यमाणसुखादेरवर्तमानत्वेन नस्मृतावतिव्याप्तिरित्यर्थः । यद्यप्यवर्तमानस्यानुपाधित्वेन विषयावच्छिन्नेनैवोक्तातिव्याप्तिनिरासस्तथापि विषयस्योपलक्षणत्वनिरासद्वारोक्तातिव्याप्तिनिरासाय वर्तमानत्वं विषयविशेषणमपेक्षितमितिध्येयम् । ननु वर्तमानस्यविषयविशेषणत्वेपि धर्माधर्मविषयकशाब्दादिज्ञानेतिव्याप्तिस्तयोर्वर्त्तमानत्वादितिशंकते ( नन्विति ) एकदेशस्थत्वंबोधयितुं स्वकीयेत्युक्तं भवान् धार्मिकस्त्वमधार्मिक इत्यादिशब्दः आदिशब्देनाहं सुकृतादृष्टवान् सुखित्वाद् अहं दुष्कृतादृष्टवान् दुःखित्वादित्यनुमानादिकं ग्राह्यं ( तत्र ) शाब्दज्ञानादौ तद्धर्मादिप्रमाणचैतन्यस्यवर्तमानविषयावच्छिन्न चैतन्याभिन्नत्वमिति प्रत्यक्षत्वप्रयोजकेयोग्यत्वस्यापिविषयाविशेषणत्वाद्धर्मादेश्चायोग्यत्वान्नातिव्याप्तिरितिपारिहरति ( नेति ) (योग्यत्वस्य ) प्रत्यक्षयोग्यत्वस्य ननुसुखादेर्धर्मादेश्चांतःकरणधर्मत्वाविशेषात्कस्यचिद्योग्यत्वंकस्यचिन्नेत्यत्रकिंनियामकमितिचेत्तत्राह ( अन्तःकरणेति ) विपक्षेबाधकमाह (अन्यथेति) फलबलकल्प्यस्वभावस्याशरणत्वइत्यर्थः ॥

**नचैवमपि वर्तमानतादशायां त्वं सुखीत्यादिवाक्य जन्यज्ञानस्य प्रत्यक्षतास्यादितिवाच्यम् । इष्टत्वात्**

---

१ उपधेयाभेदसिद्धावेककालीनोपाधिद्वयावच्छेदस्तस्माच्चोपधेयाभेदसिद्धिरिति परस्पराश्रयः ।

साध्यव्यापकत्वे सति साधनाव्यापकत्वम्



"दशमस्त्वमसि" इत्यादौ सन्निकृष्टविषयेशब्दादप्यपरोक्षज्ञानाभ्युपगमात्। अतएव पर्वतोवह्निमानित्यादिज्ञानमपि वह्न्यंशे परोक्षं पर्वतांशेऽपरोक्षं पर्वताद्यवच्छिन्नचैतन्यस्य बहिर्निःसृतान्तःकरणवृत्त्यवच्छिन्नचैतन्याभेदात्। वह्न्यंशेत्वन्तःकरणवृत्तिनिर्गमनासम्भवेन वह्न्यवच्छिन्नचैतन्यस्यप्रमाणचैतन्यस्यच परस्परंभेदात्। तथाचानुभवः "पर्वतंपश्यामि वह्निमनुमिनोमीति"॥

ननुयोग्यत्वविशेषणदानेपि सुखवर्तमानतासमये त्वं सुखीतिवाक्यजन्यज्ञानस्यप्रत्यक्षतास्यादित्याशंक्येष्टापत्त्या परिहरति (नचैवमिति) ननु त्वंसुखीत्यादिवाक्यंनस्वविषयापरोक्षज्ञानजनकं वाक्यत्वाज्ज्योतिष्टोमादिवाक्यवदित्यनुमानात्कथमुक्तवाक्यादपरोक्षज्ञानमितिचेत् दशमस्त्वमसीत्यादिवाक्येव्यभिचारान्नेत्याह ( दशम इति ) उक्तानुमानेसन्निकृष्टविषयत्वमुपाधिरपीत्याशयेनाह ( सन्निकृष्टविषय इति ) नन्वेवं तर्हिपर्वतोवह्निमानित्याद्यनुमितेरपि प्रत्यक्षत्वं स्यादितिचेत् तत्रकिंपर्वतांशे तदापाद्यते वह्न्यंशेवा नाद्यः इष्टत्वादित्याशयेनाह ( अत एवेति ) प्रमाणचैतन्यस्ययोग्यवर्तमानविषयचैतन्याभेदस्य प्रत्यक्षत्वप्रयोजकत्वाभ्युपगमादेवेत्यर्थः। द्वितीयं प्रत्याह ( वह्न्यंश इति ) आद्येहेतुमाह ( पर्वतादीति ) द्वितीयेहेतुमाह ( वह्न्यंशेत्विति ) ननुसिद्धानुगममात्रंहिकर्तुंयुक्तं परीक्षकैर्नसर्वलोकसिद्धस्यलक्षणेन निवर्तनमितिभट्टपादैरुक्तत्वात्, लक्षणेन प्रसिद्धस्यानुमितित्वस्य निवर्तनमयुक्तमितिचेत्तत्राह ( तथाचेति ) अनुभवोपीत्यर्थः। तमेवावेदयति ( पर्वतमिति ) तथाच तस्याःप्रसिद्धेर्वह्न्यंशविषयत्वान्नतन्निवर्तनमस्माभिः क्रियतइतिभावः॥

न्यायमतेतु पर्वतमनुमिनोमीत्यनुव्यवसायापत्तिः। असन्निकृष्टपक्षकानुमितौ तु सर्वांशेपि ज्ञानं परोक्षं

ज्ञानविषयक ज्ञानत्वम् १

**सुरभिचंदनमित्यादिज्ञानमपि चंदनखंडांशे अपरोक्षंसौरभांशेतुपरोक्षं सौरभ्यस्यचक्षुरिन्द्रियायोग्यतयायोग्यत्वघटितस्य निरुक्तलक्षणस्याभावात् ॥**

एवंस्वपक्षेप्रसिद्धानुगमनंप्रदर्श्यपरमतेतदतिक्रमणमापादयति ( न्यायमतइति ) स्वपक्षान्तपक्षेवैलक्षण्यद्योतकस्तुशब्दः पृथिवीपरमाणवोगंधवंतः पृथिवीत्वात्, घटादिवदित्यादावप्रत्यक्षपक्षकानुमितौपक्षेसाध्येच ज्ञानंपरोक्षमेवेत्याह ( असन्निकृष्टेति ) ननु सुरभिचंदनमित्यादौसौरभ्यांशे ज्ञानं परोक्षमपरोक्षं वा । नाद्यः,तत्सामग्र्यभावात्योग्यविषयत्वाच्च। नद्वितीयस्तदाकारवृत्त्यभावादित्याशंक्याद्यपक्षमवलंब्याह ( सुरभीति ) आदिपदेन मधुरमाम्रफलमित्यादिपरिग्रहः ( परोक्षमिति ) आघ्रातपूर्वं तत्सौरभंचेत्तर्हितत्रज्ञानं स्मृतिरनाघ्रातपूर्वंचेत्तर्हि चन्दनखण्डत्वाल्लिङ्गादनुमितिरित्यर्थः । ननु सौरभ्यस्यापि योग्यविषयत्वात्तदंशेपि ज्ञानमपरोक्षमेव किंनस्यादितिचेत्तत्राह ( सौरभ्यस्येति ) तथाचतत्तदिन्द्रिययोग्यत्वघटितलक्षणस्याभावाददोषइत्यर्थः ॥

**नचैवमेकत्र ज्ञाने परोक्षत्वापरोक्षत्वयोरभ्युपगमे तयोर्जातित्वं नस्यादितिवाच्यम् । इष्टत्वात् । जातित्वोपाधित्वपरिभाषायाः सकलप्रमाणागोचरतया अप्रमाणिकत्वात् । घटोयमित्यादिप्रत्यक्षंहि घटत्वादिसद्भावे मानं नतुतस्यजातित्वेपि ॥**

नन्वसन्निकृष्टपक्षकानुमितिस्थले पक्षापरोक्षतायां यथाऽसन्निकृष्टत्वं बाधकं तथासन्निकृष्टपक्षकानुमितिस्थले सुरभिचन्दनमित्यादौ परो-

---

१ सौरभ्यव्याप्यं चन्दनखण्डत्वमिति व्याप्तिज्ञानादिरूपपरोक्षज्ञानसामग्र्यभावादित्यर्थः । २ इदश्चन्दनखण्डं सुरभिचन्दनखण्डत्वात् चन्दनखण्डान्तरवत् ।

क्षत्वापरोक्षत्वयोरभ्युपगमे प्रसिद्धजातिबाधकसांकर्य्यप्रसंगोबाधक-
स्तथाच नेदंयुक्तमित्याशंक्यनिराचष्टे ( नचेति ) एवं उक्तप्रकारेण
जात्युपाध्युदासीनधर्ममात्रस्याभ्युपगमेन तयोर्जातित्वाभावस्येष्टत्वादिति
हेतुमाह ( इष्टत्वादिति ) ननु घटत्वादिवत्परोक्षत्वापरोक्षत्वयोरपिप्रामा
णिकतया प्रसिद्धस्यास्यानभ्युपगमेऽतिप्रसंग इतिचेत्तत्राह ( जातित्वेति )
ननु नीलघटत्वादावुपाधित्ववद्घटत्वादौजातित्वं कुतोनप्रामाणिकमित्या-
शंकानिरासायोपाधित्वग्रहणं घटत्वादौजातित्वमित्येवं रूपापरिभाषा तथा
नीलघटत्वादावुपाधित्वमित्येवं रूपा या परिभाषा तयोर्द्वयोरपिसकल-
प्रमाणाविषयतयाऽप्रामाणिकत्वादितिपरिभाषायाएवोभयत्र संबंधः ।
अप्रामाणिकत्वाज्जातित्वोपाधित्वयोरिति शेषः। इतिकेचित् । ननु कुतः
सकलप्रमाणागोचरताघटोयमितिप्रत्यक्षगोचरत्वादित्याशंक्य तस्य तत्स
द्भाव एवोपक्षीणस्य तज्जातित्वसाधन उदासीनत्वादित्याह(घटोयमिति)॥

**जातित्वरूपसाध्याप्रसिद्धौ तत्साधकानुमानस्याप्य नवकाशात् । समवायासिद्ध्या ब्रह्मभिन्ननिखिलप्र पंचस्यानित्यतया च नित्यत्वसमवेतत्वघटितजा तित्वस्य घटत्वादावसिद्धेश्च । एवमेवोपाधित्वमपि निरसनीयम् ॥**

ननु प्रत्यक्षाभावेपि घटत्वादिकं जातिः उपाधिभिन्नसामान्यधर्मत्वात्स-
त्तावदित्यनुमानमस्तु तत्र प्रमाणमित्याशंक्याह(जाति त्वेति)जातित्वरूप-
स्यनित्यानेकसमवेतत्वलक्षणस्य साध्यस्याप्रसिद्धौ तदायत्तव्याप्तिज्ञानाद्य-

---

१ अपरोक्षत्वंविहाय परोक्षत्वं पृथिवीपरमाणवोगन्धवन्तइतिज्ञानेऽस्तिपरोक्षत्वंवि-
हायापरोक्षत्वंघटोयमितिज्ञानेस्ति तदुभयश्चसुरभिचन्दनखण्डमितिज्ञानेस्ति इत्यपरो-
क्षत्वपरोक्षत्वयोः सांकर्य्यमित्यर्थः । २ अनेकनिष्ठाधिकरणतानिरूपितसमवायस
म्बन्धावच्छिन्नाधेयतेत्यर्थः ॥

भावेनानुमानानवसरादित्यर्थः। नन्वेवंभूतजातित्वाप्रसिद्धावपि तद्घटकनि-
त्यत्वैकत्वानेकसमवेतत्वानामस्त्यात्माकाशघटादिषु प्रसिद्धिरितितामादाय
तद्घटितजातित्वं घटत्वादौसेत्स्यतीत्याशंक्याह ( समवायेति ) ननु रूपी-
घटोमृदि घट इतिप्रत्ययस्य संयोगानवगाहितया परिशेषात्समवायः
सिद्ध्यतीति चेत्, न,गुणगुणिनोरवयवावयविनोश्चात्यंतभेदेतत्संबंधस्यच
तथात्वे दंडपुरुषादाविवशुक्लोघटोमृद्घट इति समानाधिकरणप्रत्यया-
नुपपत्तेः। किंच[1]समवायिभ्यां संबद्धः समवायो विशिष्ट[2]प्रत्ययनियामक
उतासंबद्धः, नाद्यस्तस्यान्यस्तस्याप्यन्यः संबंधः कल्प्य इत्यनवस्थाप्रसं-
गात्। ननु समवायिभिर्नित्यसंबद्ध एवायं गृह्यतेऽतोनोक्तदोष इतिचेत्त
र्हिसंयोगोपिसंयोगिभिर्नित्यसंबद्धत्वात्संबंधांतरंनापेक्षेतार्थांतरत्वादपेक्षत
इतिचेत् तर्हिसमवायोपि तथात्वात्कुतोनापेक्षते संयोगोगुणत्वात्तथेति
चेन्न गुणपरिभाषाया अतंत्रत्वादपेक्षाकारणस्यचतुल्यत्वान्नद्वितीयोऽति[3]प्र-
संगात्,किंचसअनेक एकोवा, आद्येऽपसिद्धांतो गौरवंच,द्वितीये रूपज्ञाना-
दिसमवायस्य वायुघटादिवृत्तिसमवायाभेदाद्रूपवान् वायुर्घटोज्ञानवानिति
प्रतीतिप्रसंगात्। नच तत्ररूपाद्यभावान्नोक्तप्रतीतिप्रसंग इतिवाच्यम्।
[4]तद्वृत्तित्वप्रयोजकसंबंधेसति तदभावव्यवहारस्य व्याहतत्त्वादित्येवं सम-
वायासिद्ध्या प्रत्यक्षेणकार्यत्वब्रह्मभिन्नत्वलिंगकानुमानेन "सदेवसोम्ये-
दमग्रआसीत्" इतिश्रुत्याच ब्रह्मभिन्नसकलप्रपंचस्यानित्यतयाच नित्य-
त्वसमवेतत्वघटितजातित्वस्य घटत्वादावसिद्धेश्चेत्यर्थः। अप्रा माणिकत्वमि
ष्टत्वेहेतुस्तत्र प्रत्यक्षस्य घटत्वादेर्जातित्वेमानाभावादिहेतुत्रयं,ननूपाधित्व-
परिभाषायाअप्यप्रामाणिकत्वं प्रतिज्ञाय कथंजातित्वपरिभाषाया एवतं-
त्वेहेतूपन्यास इत्याशंक्योक्तहेतुभिरेवतस्याअप्यप्रमाणिकत्वसाधनस्य
सुवचत्वादित्याशयेनातिदिशति। ( एवमिति ) तथाचनीलघटत्वादेरु-
पाधित्वपरिभाषा न प्रामाणिकी नीलोयंघट इत्यादिप्रत्यक्षस्य नीलघट

१ अन्यच्चेत्यर्थः।किंश्चेत्यस्यान्यच्चेत्यर्थकाव्ययत्वात्। २ विशेषितविषयकप्रत्यये त्यर्थः। ३ भूतलादौ घटाद्यभावेपि घटवद्भूतलमित्यादिप्रतीतिप्रसङ्गादित्यर्थः। ४ रूपादिनिष्ठाधेयत्वेत्यर्थः। ५ अप्रामाणिकत्वे।

त्वसद्भावेमानतया तस्योपाधित्वेऽमानत्वात् उपाधित्वरूपसाध्याप्रसिद्धौ तत्साधकनीलघटत्वादिकमुपाधिर्जातिभिन्नसामान्यधर्मत्वात् आकाशत्वादिवदित्यनुमानानवकाशात्समवायाद्यसिद्धयोपाधित्वासिद्धेश्चेत्येवं निरसनीयमित्यर्थः ॥

पर्वतोवह्निमानित्यादौ च पर्वतांशे वह्न्यंशेचान्तःकरणवृत्तिभेदांगीकारेण तत्तद्वृत्त्यवच्छेदकभेदेन परोक्षत्वापरोक्षत्वयोरेकत्र चैतन्ये वृत्तौन विरोधः । तथाच तत्तदिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशेप्रत्यक्षत्वम् ॥

नन्वेवमप्येकस्यैवचैतन्यस्य परोक्षत्वापरोक्षत्वात्मविरुद्धधर्माक्रांत्तत्वं विरुद्धमित्याशंक्याह ( पर्वतइति ) चैतन्ये प्रमात्मकचैतन्ये एवंसतीदंफलितमित्याह ( तथाचेति ) तत्तद्वृत्त्यवच्छिन्नचैतन्यस्य तत्तादिन्द्रिययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तस्मिंस्तस्मिन्ज्ञानांशेप्रत्यक्षत्वप्रयोजकमिति ज्ञानगतस्यप्रत्यक्षत्वस्य प्रमाणचैतन्यस्य विषयावच्छिन्नचैतन्याभिन्नत्वमित्युक्तप्रयोजकेन विवक्षितमित्यर्थः ॥

घटादेर्विषयस्य प्रत्यक्षत्वंतु प्रमात्रभिन्नत्वम् । ननु कथं घटादेरन्तःकरणावच्छिन्नचैतन्याभेदः अहमिमंपश्यामि, इतिभेदानुभवविरोधादितिचेत् । उच्यते । प्रमात्रभेदो नाम नतदैक्यं, किंतुप्रमातृसत्तातिरिक्तसत्ताकत्वाभावः । तथाच घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैवघटादिसत्ता । अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनंगी

कारात् । विषयचैतन्यंचपूर्वोक्तप्रकारेणप्रमातृचैत न्यमेवेति । प्रमातृचैतन्यस्यैवघटाद्यधिष्ठानतया प्रमातृसत्तैवघटादिसत्ता नान्येतिसिद्धं घटादेरपरो क्षत्वम् ॥

एवंज्ञानगतप्रत्यक्षत्वस्य प्रयोजकमभिधाय प्रमेयगतस्य तस्यतदाह ( घटादेरिति ) तुशब्देनेन्द्रियजन्यज्ञानविषयत्वं विषयप्रत्यक्षत्वमित्यादि- तल्लक्षणनिरासः मनोरूपेन्द्रियजन्यानुमितिज्ञानविषयेतिव्याप्तेः ( प्रमात्र- भिन्नत्वं इति ) घटादेर्विषयस्येत्यनुषज्यते। ननु विषयस्यघटादेः प्रमात्रभि न्नत्वमुच्यते तदवच्छिन्नचैतन्यस्य वा नाद्यः तस्यजडत्वेन तत्त्वासंभवात् नद्वितीयः अहं मनुष्य इतिवदहंघट इतिप्रतीतिःस्यात् नचसोपलभ्यते॥ उपलभ्यतेचतद्विरुद्धाहमिमं पश्यामीतिभेदप्रतीतिरतःकथंविषयस्य प्रमात्र भेद इतिशंकते(नन्विति)प्रमात्रभेदोनामघटादेस्तदवच्छिन्नचैतन्यस्यचैक्यं नविवक्षितंयेनविरोधः स्यादपित्वन्यदेवतदभिन्नत्त्वमितिसमाधत्ते ( उच्य- तइति) प्रमातृसत्तेत्यस्यप्रमातृलक्षणसत्तेत्यर्थः नतुतन्निष्ठसत्ताजातिःप्रमातृ प्रमेयनिष्ठसत्ताजातेरेकतया तन्निष्ठसत्तातिरिक्तसत्ताया असिद्धेः । तथाच प्रमात्रभेदस्योक्तलक्षणेसतीदंफलितमित्याह (तथाचेति) प्रमातृचैतन्यमेवे त्यतःप्रमातृसत्तातिरिक्तसत्ताशून्यत्वंघटादेरपरोक्षत्वंसिद्धमित्यर्थः ॥

अनुमित्यादिस्थलेत्वन्तःकरणस्य वह्न्यादिदेशनिर्ग मनाभावेन वह्न्यवच्छिन्नचैतन्यस्य प्रमातृचैतन्या नात्मकतया वह्न्यादि सत्ताप्रमातृसत्तातोभिन्नेतिना तिव्याप्तिः । नन्वेवमपि धर्माधर्मादि गोचरानुमित्या दिस्थले धर्माधर्म्मयोः प्रत्यक्षत्वापत्तिः धर्माद्यव च्छिन्नचैतन्यस्य प्रमातृचैतन्याभिन्नतया धर्मा

दिसत्तायाः प्रमातृसत्तानतिरेकादितिचेत्, न, योग्य त्वस्यापि विषयविशेषणत्वात् ॥

अनुमेयवह्न्यादेश्चैतन्यसजातिरिक्तसत्ताशून्यत्वेपि तस्य प्रमात्रनात्मकतयानातिव्याप्तिरितिचैतन्यपदंविहाय प्रमातृपदोपादानमित्याशयेनाह ( अनुमित्यादीति ) नन्वेवमप्यतिव्याप्तिरस्तीतिशंकते ( नन्विति ) प्रत्यक्षयोग्यत्वस्यापिविषयविशेषणत्वेन योग्यविषयस्यप्रमात्रभिन्नत्वरूपलक्षणस्यधर्मादावभावान्नातिव्याप्तिरित्याह ( नेति ) ॥

नन्वेवमपि रूपीघट इति प्रत्यक्षस्थले घटगतपरिमाणादेः प्रत्यक्षत्वापत्तिः रूपावच्छिन्नचैतन्यस्य परिमाणाद्यवच्छिन्नचैतन्यस्यचैकतया रूपावच्छिन्नचैतन्यस्य प्रमातृचैतन्याभेदे परिमाणाद्यवच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया परिमाणादिसत्तायाः प्रमातृसत्तातिरिक्तत्वाभावादितिचेत्,न, तत्तदाकारवृत्त्युपहितत्वस्यापि प्रमातृविशेषणत्वात्। रूपाकारवृत्तिदशायां परिमाणाद्याकारवृत्त्यभावेन परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वाभावेनातिव्याप्त्यभावात् ॥

ननु घटगतरूपप्रत्यक्षदशायांतद्गतपरिमाणादावतिव्याप्तिः रूपावच्छिन्नचैतन्यस्यैवपरिमाणाद्यवच्छिन्नचैतन्यरूपतया तस्यतदभिन्नप्रमातृसत्तातिरिक्तसत्ताकत्वाभावादिति शंकते ( नन्वेवमपीति) परिमाणादेः प्रमातृसत्तातिरिक्तसताशून्यत्वेपि परिमाणाद्याकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताशून्यत्वाभावान्नातिव्याप्तिरितिसमाधत्ते ( नेति ) ॥

---

१ परिमाणादेः ।

नन्वेवं वृत्तावव्याप्तिः अनवस्थाभिया वृत्तिगोचरवृत्त्यनंगीकारेण तत्र स्वाकारवृत्त्युपहितत्वघटितोक्तलक्षणाभावादितिचेत्, न, अनवस्थाभिया वृत्तेर्वृत्त्यन्तराविषयत्वेऽपि स्वविषयत्वाभ्युपगमेन स्वविषयवृत्त्युपहितप्रमातृचैतन्याभिन्नसत्ताकत्वस्य तत्रापिभावात् । एवंचान्तःकरणतद्धर्मादीनां केवलसाक्षिविषयत्वेपि तत्तदाकारवृत्त्यभ्युपगमेनोक्तलक्षणस्य तत्रापिसत्त्वान्नाव्याप्तिः ॥ २८ ॥



ननुपरिमाणादावतिव्याप्तिवारणाय तत्तदाकारवृत्त्युपहितत्वस्यापिप्रमातृविशेषणत्वेवृत्तावव्याप्तिरितिशंकते ( नन्वेवमिति ) अनवस्थाभयेन वृत्तिगोचरवृत्त्यनंगीकारेपिघटमहंजानामीतिवृत्तेः स्वविषयत्वाभ्युपगमात्स्वेतरवृत्त्यवच्छिन्नचैतन्यप्रकाश्यतया स्वावच्छिन्नचैतन्यप्रकाश्यत्वेसतिप्रकाशमानत्वान्नाव्याप्तिरित्याशयेनाह(नेति)यथावृत्तेर्वृत्त्यंतराविषयत्वेपि स्वविषयत्वाभ्युपगमादव्याप्तिनिरास एवमन्तःकरणस्य तद्धर्माणां कामादीनां चकेवलसाक्षिविषयत्वेपि वृत्तिविषयत्वस्वीकारान्न तत्राव्याप्तिरित्याह— ( एवंचेति ) आदिनाप्रातिभासिकरजतादिसंग्रहः ॥

नचान्तःकरणतद्धर्मादीनां वृत्तिविषयत्वाभ्युपगमे केवलसाक्षिविषयत्वाभ्युपगमविरोध इतिवाच्यम् । नहि वृत्तिंविनासाक्षिविषयत्वं केवलसाक्षिवेद्यत्वं किंत्विन्द्रियानुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वम् । अत एवाहंकारटीकायामाचार्य्यैरहमाकारान्तःकरणवृत्तिरंगीकृता,अत एव च प्रातिभासिकरजतस्थले रजताकाराविद्यावृत्तिःसांप्रदायिकैरंगी

**कृता, तथाचान्तःकरणतद्धर्मादिषु केवलसाक्षिवेद्येषु वृत्त्युपहितत्वघटितलक्षणस्य सत्त्वान्नाव्याप्तिः ॥**

ननु वृत्त्यादिव्यावर्तककेवलपदविरोधात्कथं वृत्तिविषयत्वमभ्युपगन्तुं शक्यमित्याशंक्य परिहरति ( नचेति ) केवलपदं न वृत्तिनिरासार्थमपितिविन्द्रियानुमानादिप्रमाणव्यापारनिवृत्त्यर्थमतो न तद्विरोध इत्याह। ( नहीति ) स्वोक्तार्थे पद्मपादाचार्यसंमतिमाह ( अतएवेति ) यतो नवृत्तेःकेवलपदव्यावर्त्यत्वमत एवाहंवृत्त्यवच्छिन्नमेवान्तःकरणं चैतन्यविषयभावमापद्यत इत्यहंकारटीकायामाचार्यैरहमित्त्याकारान्तःकरणविषयावृत्तिरंगीकृतेत्यर्थः ( सांप्रदायिकैरिति ) सर्वज्ञमुनिप्रमुखैः अन्तःकरणादीनां वृत्तिविषयत्वे निर्विवादेसातिफलितमव्याप्तिनिराकरणमुपसंहरति ( तथाचेति ) ॥

निर्गीतो

**तदयंनिर्गलितोर्थः, स्वाकारवृत्त्युपहितप्रमातृचैतन्य सत्तातिरिक्तसत्ताकत्वशून्यत्वेसति योग्यत्वं विषयस्य प्रत्यक्षत्वम्। तत्र संयोगसंयुक्ततादात्म्यादीनां सन्निकर्षाणां चैतन्याभिव्यंजकवृत्तिजनने विनियोगः ॥**

श्रोतृसुखप्रतिपत्तये दत्तैर्विशेषणैर्निष्पन्नलक्षणं निष्कृष्य दर्शयति ( तदयमिति ) तत्तस्य पूर्वोक्तस्यायं तत्तस्मादयमिति वा स्वं विषयस्तदाकारात्तद्गोचरायावृत्तिस्तदुपहितं यत्प्रमातृचैतन्यं तद्रूपा या सत्ता तदतिरिक्तासत्तायस्यसतथातस्यभावस्तत्त्वं तेन शून्यत्वे सति तदतिरिक्तसत्तावत्त्वरहितत्त्वेसति प्रत्यक्षयोग्यत्वं प्रत्यक्षव्यवहारप्रयोजकमित्यथः। एवं ज्ञानगतस्यज्ञेयगतस्य च प्रत्यक्षत्वस्य प्रयोजकमुक्तं तत्र तादृशवृत्त्यवच्छिन्नचैतन्यस्य,तादृशविषयावच्छिन्नचैतन्याभिन्नत्वं ज्ञानगतप्रत्यक्षत्वप्रयोजकं तादृशविषयस्य तथाभूतप्रमातृचैतन्याभिन्नत्वं विषयगतप्रत्यक्षत्वस्य प्रयोजकमिति विवेकस्तत्र प्रत्यक्षस्य विषयस्य प्रत्यक्षज्ञानंचैतन्यमेव तच्चानादीतिसंयोगादिसन्निकर्षाणां क्वविनियोग इत्य-

पेक्षायामाह ( तत्रेति ) उक्तरीत्योभयप्रयोजकेसिद्धेसति संयोगः संयुक्ततादात्म्यं संयुक्ताभिन्नतादात्म्यमित्येवं रूपाणां सन्निकर्षाणां घटतद्गतरूपरूपत्वशब्दशब्दत्वावच्छिन्नचैतन्याभिव्यंजकवृत्त्युत्पादने विनियोग इत्यर्थः ॥

**साचवृत्तिश्चतुर्विधा संशयो निश्चयो गर्वः स्मरणमिति । एवंविध वृत्तिभेदेन एकमप्यन्तःकरणं मन इति बुद्धिरिति अहंकारइति चित्तमिति व्याख्यायते । तदुक्तम्–**

**मनोबुद्धिरहंकारश्चित्तं करणमान्तरम् ॥**
**संशयो निश्चयो गर्वः स्मरणं विषया इमे ॥ १ ॥**

यस्याजनने एतेषां विनियोगः सावृत्तिःकतिविधेत्यपेक्षायामाह (साचेति) सन्निकर्षजन्यवृत्त्यवच्छिन्नचैतन्यस्यप्रत्यक्षत्वाद्वृत्तेश्चान्तःकरणपरिणामत्वात्तद्घटकवृत्तिमदन्तःकरणनिरूपणं न प्रकृतासंगतमिति द्रष्टव्यं । संशयाकारानिश्चयाकारागर्वाकारास्मरणाकारा संशयाद्याकारेण परिणामरूपावृत्तिश्चतुर्धेत्यर्थः । एवं संशयादिविषयाकारपरिणामविविधवृत्तिभेदेनैकमप्यन्तःकरणं संशयाकारवृत्तिमन्मन इत्याख्यायते निश्चयाकारवृत्तिमद्बुद्धिरित्युच्यते गर्वाकारवृत्तिमदहंकार इत्यभिधीयते स्मरणाकारवृत्तिमच्चित्तमिति व्यपदिश्यतेइत्यर्थः । स्वोक्तविभागेपूर्वाचार्यसंमतिमाह ( तदुक्तमिति ) वृत्तिभेदेन तत्तद्वृत्तिमतोभेदादन्तःकरणंमन आदिभेदेन चतुर्विधं संशयादयोऽमी विषया एतेषां विषयत्वे एतदाकारवृत्तीनामप्येतन्नामकत्वान्नप्रकृतप्रतिकूलतेति भावः ॥

**तच्च प्रत्यक्षं द्विविधम् । सविकल्पकनिर्विकल्पकभेदात् । तत्र सविकल्पकं वैशिष्ट्यावगाहिज्ञानं यथा घटमहं जानामीत्यादि ज्ञानम् ।निर्विकल्पकं तु संसर्गानवगाहिज्ज्ञानं यथा सोयं देवदत्तः तत्त्वमसीत्यादिवाक्यजन्यज्ञानम् ॥**

प्रत्यक्षघटकवृत्तिस्वरूपमभिधाय विषयावच्छिन्नचैतन्याभिन्नवृत्त्यवच्छिन्नचैतन्यरूपमुक्तं प्रत्यक्षं विभज्य दर्शयति ( तच्चेति ) तत्र प्रथमोद्दिष्टत्वात्सकलवादिसंमतत्वादाखिलव्यवहारप्रयोजकत्वादादौ सविकल्पकं लक्षयति ( तत्रेति ) तत्रतयोर्मध्ये विकल्पोवैशिष्ट्यंतेन सहवर्ततइतिसविकल्पकं वैशिष्ट्यविषयकमित्यर्थमभिप्रेत्याह ( वैशिष्ट्यावगाहीति ) तथात्वमिच्छादावतिव्याप्तमित्यत उक्तं ज्ञानमिति। तत्त्वंतुनिर्विकल्पकेऽतिव्याप्तमित्यतउक्तं वैशिष्ट्यावगाहीति । उदाहरणमाह ( यथेति ) घटमहंजानामीत्यादिज्ञानं घट विशेषणविशिष्टज्ञानावगाहिज्ञानत्वाद्वैशिष्ट्यावगाहीत्यर्थः । निर्गतोविकल्पो यस्मादितिनिर्विकल्पकमित्यर्थः । मभिप्रेत्याद्वितीयं लक्षयति । ( निर्विकल्पकंत्विति ) संसर्गो विशेषणविशेष्यसंबंधो वैशिष्ट्यमितियावत्। उदाहरणमाह ( यथेति ) देशकालोपलक्षितदेवदत्तलक्षणाभेदविषये सोयंदेवदत्त इतीन्द्रियजन्यैक्यप्रत्यक्षेसन्निकर्षवशादुपलक्षकदेशकालादेरपि भानसंभवात्।शाब्देतु ज्ञाने तात्पर्यविषयस्यैव भाननियमात्। अभेदमात्रविषयत्वाच्छाब्दमेवैतदुदाहरणमित्यभिप्रेत्याह ( वाक्यजन्येति ) प्रकृष्टप्रकाशश्चन्द्रः "सत्यंज्ञानमनंतंब्रह्म" इत्याद्यवांतरवाक्यमादिशब्दार्थः ॥

ननु शाब्दमिदंज्ञानं न प्रत्यक्षमिन्द्रियाजन्यत्वादिति चेत्, न, नहि इन्द्रियजन्यत्वं प्रत्यक्षत्वे तंत्रं दूषितत्वात्। किंतु योग्यवर्तमानविषयकत्वे सति प्रमाणचैतन्यस्य विषयचैतन्याभिन्नत्वमित्युक्तम्। तथाच सोऽयंदेवदत्तः इतिवाक्यजन्यज्ञानस्य सन्निकृष्टविषयतया बहिर्निःसृतान्तःकरणवृत्त्यभ्युपगमेन देवदत्तावच्छिन्नचैतन्यवृत्त्यवच्छिन्नचैतन्ययोरभेदेन सोऽयं देवदत्तः इतिवाक्यजन्यज्ञानस्य प्रत्यक्षत्वम् ॥

ननु निर्विकल्पकप्रत्यक्षंलक्षयित्वावाक्यजन्यज्ञानस्यतल्लक्ष्यत्वाभिधानमत्यंतासंगतमित्याशयेन शंकते (नन्विति) शाब्दज्ञानस्य इन्द्रियाजन्यत्वेपि निरुक्तप्रत्यक्षत्वप्रयोजकसत्त्वात्सन्निहितविषयकवाक्यजन्यज्ञानस्यापि प्रत्यक्षत्वाभ्युपगमान्नासंगतिरित्याशयेनाह ( नहीति ) इन्द्रियजन्यत्वस्यमनोरूपेन्द्रियजन्यानुमित्यादावतिव्याप्त्यादिप्रदर्शनेन दूषितत्वात्, उक्तंविस्मृत्यपृच्छति ( किंत्विति ) प्रोक्तंस्मारयति (योग्येति) यद्यपिप्रमाणचैतन्यस्ययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वंपूर्वमुक्तं तथापि तत्त्वेयोग्यवर्तमानविषयकत्वेसतिप्रमाणचैतन्यस्यविषयावच्छिन्नचैतन्याभिन्नत्वेचाविशेषाभावादेवमुक्तं तथाचप्रमाणचैतन्यस्ययोग्यवर्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं पूर्वमुक्तमितिभावः । तथाचेंद्रियजन्यत्वस्याप्रयोजकत्वे निरुक्तस्य प्रयोजकत्वेच सतीदंफलितमित्याह ( तथाचेति ) ॥

**एवं तत्त्वमसि इत्यादिवाक्यजन्यज्ञानस्यापि तत्र प्रमातुरेवविषयतया तदुभयाभेदस्य सत्त्वात् । ननु वाक्यजन्यज्ञानस्य पदार्थसंसर्गावगाहितया कथंनिर्विकल्पकत्वम् । उच्यते । वाक्यजन्यज्ञानविषयत्वे हिनपदार्थसंसर्गत्वं तंत्रं अनभिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः किंतु तात्पर्यविषयत्वम्॥**

नन्वेवं लौकिकोदाहरणसंभवेपिवैदिकं नसंभवति "विज्ञातारमरेकेनविजानीयात्" इत्यादिश्रुत्या प्रमातुर्विषयत्वनिरासात्तत्पदार्थाभिन्नत्वं पदार्थप्रमातृचैतन्यस्यविषयावच्छिन्नचैतन्यत्वाभावान्निरुक्तप्रयोजकस्यासत्त्वादित्याशंक्याह ( एवमिति ) तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्यापि सन्निकृष्टतत्त्वं पदलक्ष्यविषयतयोक्तवाक्यजन्यान्तःकरणवृत्त्यभ्युपगमेनलक्ष्यचैतन्यस्यवृत्त्यवच्छिन्नचैतन्यस्याभेदेनप्रत्यक्षत्वमित्यर्थः ( तत्र )

१ योग्यवर्तमानविषयकत्वे सतिप्रमाणचैतन्यस्यविषय चैतन्याभिन्नत्वमुक्तमित्यर्थः ।

तस्मिन्ज्ञाने प्रमातृपदेनलक्ष्यंग्राह्यंत्वंपदलक्ष्यात्तत्पदलक्ष्यस्याभिन्नत्वादेवमुक्तं श्रुतिस्तुफलव्याप्यत्वनिषेधपरा ननु सोयंदेवदत्त इत्यादिवाक्यजन्यंज्ञानं संसर्गावगाहिवाक्यजन्यज्ञानत्वाद्गामानयेति वाक्यजन्यज्ञानवदुक्तवाक्यजन्यज्ञानं न निर्विकल्पकं संसर्गावगाहित्वात्तद्वदितिवेत्याशयेन शंकते ( नन्विति ) भवेदेवं यदिवाक्यजन्यज्ञानविषयत्वं पदार्थसंसर्गत्वं तंत्रं भवेन्नतुतथातथा त्वेहि भोजनप्रकरणेसैंधवमानयेत्यत्रानभिमतस्याश्वादिसंसर्गस्यापि तत्वापत्तेरित्याशयेनाह ( उच्यतइति ) ननु पदार्थसंसर्गत्वस्यतत्रतंत्रत्वाभावे किंतत्रतंत्रमितिपृच्छति ( किंत्विति । यस्तात्पर्यविषयः स एव वाक्यजन्यज्ञानगोचरः सचसंसर्गोऽसंसर्गोवेति विशेषोनादर्तव्य इत्याह ( तात्पर्य्येति ) ॥

**प्रकृतेच "सदेवसोम्येदमग्रआसीत्" इत्युपक्रम्य "तत्सत्यं सआत्मा तत्त्वमसि श्वेतकेतो" इत्युपसंहारेण विशुद्धे ब्रह्मणि वेदान्तानांतात्पर्यमवसितमिति कथं तात्पर्याविषयसंसर्गमवबोधयेत्। इदमेव तत्त्वमस्यादिवाक्यानामखंडार्थत्वम्, यत्संसर्गानवगाहियथार्थज्ञानजनकत्वमिति ॥**

प्रकृते तु पिंडमात्रेलौकिकवाक्यस्येवोपक्रमोपसंहारादितात्पर्यलिंगैस्तत्वमस्यादिवेदांतवाक्यानामद्वितीयेविशुद्धेब्रह्मणितात्पर्यावधारणादसंसर्गस्यैवतात्पर्यगोचरत्वात्सोयमित्यादिवाक्यानां तात्पर्याविषयसंसर्गावगाहित्वं बाधितमित्याशयेनाह ( प्रकृतेइति ) ननु तत्त्वमस्यादिवाक्यानां प्रसिद्धमखंडार्थत्वं विहाय कथं संसर्गानवगाहिज्ञानजनकत्वमपूर्वमुक्तमित्याशंक्याह ( इदमेवेति ) ॥

**तदुक्तम्—संसर्गासंगिसम्यग्धीहेतुता या गिरामियम् ॥**
**उक्ताखंडार्थता यद्वा तत्प्रातिपदिकार्थता ॥ १ ॥**

**प्रातिपदिकार्थमात्रपरत्वं वाऽखंडार्थत्वमितिचतुर्थ पादार्थः ॥**

एवकारोप्यर्थे। तेन च प्रातिपदिकार्थमात्रपरत्वमखंडार्थत्वमित्यस्य समुच्चयस्तत्राचार्य्यसम्मतिमाह ( तदुक्तमिति ) चित्सुखाचार्य्यैरितिशेषः गिरांतत्त्वमस्यादिवाक्यानां संसर्गासंगिसम्यक्धीहेतुता यासेयमखंडार्थतोक्तातदनवगाहियथार्थज्ञानहेतुत्वं यत्तदिदमखंडार्थत्वमुक्तमित्यर्थः । तासां प्रातिपदिकार्थताऽखंडार्थतोक्तितिलक्षणस्यसंसर्गपरेवाक्येऽतिव्याप्तिस्तत्रापि प्रातिपदिकार्थप्रतिपादकत्वसत्त्वादित्याशंक्याह ( प्रातिपदिकेति ) तथाचतत्र तन्मात्रप्रतिपादकत्वाभावान्नातिव्याप्तिरितिभावः॥

**तच्च प्रत्यक्षं पुनर्द्विविधं, जीवसाक्षि ईश्वरसाक्षिचेति। तत्र जीवोनामान्तःकरणावच्छिन्नचैतन्यं तत्साक्षितु अंतःकरणोपहितचैतन्यं अन्तःकरणस्य विशेषण त्वोपाधित्वाभ्यामनयोर्भेदः। विशेषणंच कार्यान्वयि व्यावर्त्तकं उपाधिश्चकार्य्यानन्वयिव्यावर्तकोवर्तमानश्च रूपविशिष्टो घटोऽनित्य इत्यत्र रूपं विशेषणम्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमित्यत्र कर्ण शष्कुल्युपाधिः। अयमेवोपाधिर्नैयायिकैः परिचायक इत्युच्यते ॥**

उक्तप्रत्यक्षज्ञानस्य साक्षिद्वैविध्येन द्वैविध्यमाह ( तच्चेति ) संसर्गावगाहित्वानवगाहित्वभेदेपि ज्ञानं चैतन्यरूपमेकमेव, तच्चजीवसाक्षीश्वरसाक्षिभेदेन द्विविधमित्यर्थः । यत्तु साक्षिपदं तज्जन्यपरं तथाच जीवसाक्षिजन्यमीश्वरसाक्षिजन्यमितिद्विविधमित्यर्थः इति केचित् । तन्नोपादेयम्।ज्ञानस्य चैतन्यरूपत्वप्रदिपादनात् तत्रजीवसाक्षिनिरूपणस्यजीव निरूपणाधीनत्वाज्जीवस्वरूपनिरूपणपूर्वकं तत्साक्षिस्वरूपं लक्षयति ।

( तत्रेति ) जीवसाक्षीश्वरसाक्षिणोर्मध्ये अन्तःकरणस्य विशेषणत्वेचैतन्यस्य जीवत्वं तस्योपाधित्वेतस्य तत्साक्षित्वमिति तयोर्भेद एतदेव स्फोटयति ( अन्तःकरणस्येति ) विशेषणोपाध्योर्वर्त्तमानत्वे सति व्यावर्त्तकत्वं यद्यपि समानंतथापि कार्यान्वयित्वतदनन्वयित्वभेदात्तद्विशिष्टतदुपहितचैतन्ययोरपिभेद इत्याशयेनाह ( विशेषणंचेति ) कार्यान्वयिव्यावर्तकं वर्तमानंचेत्यपिबोध्यम् । तथाच कार्यान्वयित्वे सति वर्तमानत्वेसति व्यावर्तकत्वं विशेषणत्वम्।कार्यानन्वयित्वेसति यथोक्तत्वमुपाधित्वं कार्य्यपदमत्रावच्छेद्यान्वययोग्यपरं विशेषणोदाहरणमाह। ( रूपेति ) रूपस्य कार्यान्वयित्त्वादिसत्वाद्विशेषणत्वं उपाध्युदाहरणमाह। ( कर्णेति ) कर्णशष्कुल्याः कार्यानन्वयित्वादिसत्त्वादुपाधित्वम् । स्वोक्तोपाधेर्नैय्यायिकैर्व्यवह्रियमाणंसंज्ञामाह ( अयमेवेति ) ॥

**प्रकृतेचान्तःकरणस्य जडतया विषयभासकत्वायोगेन विषयभासकचैतन्योपाधित्वम् । अयंच जीवसाक्षी प्रत्यात्मन्नाना एकत्वे मैत्रावगते चैत्रस्याप्यनुसंधानप्रसंगः । ईश्वरसाक्षितु मायोपहितचैतन्यं तच्चैकम् । तदुपाधिभूतमायाया एकत्वात् । "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतौ मायाभिरिति वहुवचनस्य मायागतशक्तिविशेषाभिप्रायतया मायागतसत्त्वरजस्तमोरूपगुणाभिप्रायतयावोपपत्तेः ॥**

नन्वस्तुकर्णशष्कुल्यादेरुपाधित्वमन्तःकरणस्य तु तत्त्वंप्रयोजनशून्यं नहिप्रमाताविषयभासनायस्वसाक्षिणमपेक्षते चक्षुरादिजन्यवृत्त्यवच्छिन्नचैतन्येनैवविषयप्रकाशसंभवादित्याशंक्यान्तःकरणस्य जडतयाविषयभासकत्वायोगाद्वृत्तीनां नानात्वेन तदवच्छिन्नचैतन्यस्याप्यनेकतया समस्तविषयानुसंधातृत्वानुपपत्तेः प्रमातुश्चान्तःकरणावच्छिन्नत्वेन विषयानुसंधानार्थमन्यापेक्षत्वात्तदन्वितस्य ब्रह्माभिन्नस्यसाक्षिण आवश्यकत्वा–

त्तदुपाधित्वमन्तःकरणस्यावश्यमभ्युपेयमित्याशयेनाह ( प्रकृतइति ) ननु जीवसाक्षिणोब्रह्माभेदेन स्वयंप्रकाशत्वेन सर्वविषयानुसंधातृत्वाभ्युपगमे ब्रह्मण एकत्वात्तदभिन्नसाक्षिणोऽपिएकत्वाच्चैत्रावगतेमैत्रस्याप्यनुसंधानप्रसंग इत्याशंक्योपाधिभेदेन तस्य नानात्वस्वीकाराददोष इत्याह ( अयंचेति ) एवं जीवसाक्षिणं निरूप्येश्वरसाक्षिणं निरूपयति । ( ईश्वरसाक्षीति ) तदपि जीवसाक्षिवन्नाना किंवैकमित्यपेक्षायामाह । ( तच्चैकमिति ) तत्र हेतुमाह ( तदिति ) अनाद्यनिर्वचनीयत्वे सति विपर्ययोपादानभूताविक्षेपशक्तिप्रधाना माया । ननु तस्या एकत्वं मायाभिरितिश्रुतिविरुद्धमित्याशंक्याह ( इन्द्रइति ) इन्द्रोनिरंकुशैश्वर्यः परमात्मामायाभिः पुरुरूपोबहुरूपईयते प्रतीयतेयथा वह्न्यादेर्दाहकत्वप्रकाशकत्वादिकार्यदर्शनात्तदनुकूलाः शक्तिविशेषाः कल्प्यंते तथाजगद्रूपविचित्रकार्यदर्शनान्मायायास्तेकल्प्यंतइति तदभिप्रायतयेत्यर्थः ॥

मायांतु प्रकृतिं विद्यान्मायिनंतु महेश्वरम् ॥

"अजामेकांलोहितशुक्लकृष्णांबह्वीः प्रजास्सृजमानां सरूपाः ॥ अजोह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"

तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते ॥

योगीमायाममेयाय तस्मैविद्यात्मनेनमः ॥ १ ॥

इत्यादि श्रुतिस्मृतिषु एकवचनबलेन लाघवानुगृहीतेन मायाया एकत्वं निश्चीयते । ततश्च तदुपहित चैतन्यं ईश्वरसाक्षि, तच्चानादि तदुपाधेर्मायाया अनादित्वात् ॥

ननु मुख्यार्थपरित्यागे किं कारणमित्याशंक्यानेकश्रुतिस्मृतिगतैकवचनसिद्धतदेकत्वनिश्चय एवेत्याह ( मायांत्विति ) नन्विदमेकवचनं

जात्यभिप्रायकं किंनस्यादित्याशंक्यैतच्छंकानिवर्तकैकपदयुक्तांश्रुतिं पठति। (अजामिति ) जन्मशून्यामनादिभूतांस्वसमानजातीयेतरप्रकृतिशून्यामेकांलोहितशुक्लकृष्णां रजःसत्त्वतमोमयींबह्वीःप्रजास्समानरूपास्त्रिगुणात्मिकाः सृजमानां ( एको)अजन्माजीवो जुषमाणः सेवमानोऽनुशेते तत्तादात्म्यापन्नोभवति जहात्येनां भुक्तभोगामजोन्य ईश्वर इत्यर्थः। मायाया एकत्वं श्रुतितात्पर्यसिद्धमितिकथं ज्ञातं श्रुतितात्पर्यस्य दुरूहत्वादित्याशंक्यस्मृतिकारानुसारेणेत्याशयेन पराशरस्मृतिंपठति ( तरतीति ) यस्मिन्परात्मनि हृदिनिवेशिते वृत्त्यारूढे कृते योगी अविद्यां तरति तस्मैज्ञानस्वरूपायामेयाय वृत्त्यवच्छिन्नचैतन्यागोचराय नमः अविद्यां विशिनष्टि ( विततामिति ) प्रपंचाकारेण परिणतत्वात् सर्वत्रव्याप्तामित्यर्थः। ननु तन्निवृत्तवपि नानर्थनिवृत्तिः सर्वानर्थभूताया मायाया अवशिष्टत्वादित्याशंक्याह ( मायामिति ) स्वाश्रयाव्यामोहकत्वव्यामोहकत्वविशेषेपिवस्तुतो न तयोर्भेद इत्याशयः। ननु स्मृतावपि जातावेकवचनस्य संभावादेकपदस्यामुख्यार्थकताया अपि सुवचत्वात्कथंतदेकत्वनिश्चय इत्याशंक्याह ( लाघवेति ) "अविद्यायामंतरे वर्तमाना" "मम मायादुरत्यय" इत्यादिश्रुतिस्मृतीनां आदिपदेन संग्रहः उपसंहरति ( ततश्चेति ) यथोपाधिभूतमायाया एकत्वात्तस्यैकत्वंतथातस्या अनादित्वात्तस्यानादित्वमपीत्याह ( तच्चेति ) तच्चैतन्यमनाद्यपीत्यर्थः॥

**मायावच्छिन्नं चैतन्यं परमेश्वरः मायाया विशेषणत्वे ईश्वरत्वमुपाधित्वे साक्षित्वमिति ईश्वरत्वसाक्षित्वयो र्भेदः, नतु धर्मिणोरीश्वरतत्साक्षिणोः। सच परमेश्वर एकोपि स्वोपाधिभूतमायानिष्ठसत्त्वरजस्तमोगुणभेदेन ब्रह्मविष्णुमहेश्वर इत्यादिशब्दवाच्यतां लभते॥**

ईश्वरसाक्षिज्ञानस्येश्वरज्ञानापेक्षत्वादाह (मायेति) पूर्ववदत्रापिमायाया विशेषणत्वोपाधित्वाभ्यामीश्वरत्वसाक्षित्वयोर्भेद इत्याह ( मायाया

इति ) तथाच यथानास्ति पाचकपाठकयोर्भेदः किंतु पाचकत्वपाठकत्वयोस्तद्वन्नेश्वरतत्साक्षिणोर्भेदोऽपित्वीश्वरत्वसाक्षित्वयोरित्यर्थः । ननु मायाया एकत्वाद्यथेश्वरसाक्षिण एकत्वं तथातदवच्छिन्नस्याप्येकत्वावश्यंभावात्कथं तस्य ब्रह्मादिरूपेणभेदस्तस्य विशेषणभेदमूलत्वात्तद्भेदेच तस्यैवोपाधितया तदुपहितस्याप्यनेकत्वौचित्यात्कथं तदेकतेत्याशंक्य यथामायोपाधिगतगुणभेदाभिप्रायेण तदनेकत्वव्यपदेशस्तथा तद्गतगुणावच्छेदेनेश्वरभेदोनतुवस्तुत इत्याशयेनाह ( सचेति ) उपाधिपदमत्रविशेषणपरं । तथाच मायावच्छिन्नेश्वरचैतन्यमेवोद्भूतसत्त्वगुणमायावच्छिन्नं पालयितृविष्णुनारायणादिशब्दवाच्यतां भजते तदेवोद्भूतरजोगुणमायावच्छिन्नं स्रष्टृब्रह्मविधात्रादिशब्दप्रतिपाद्यतां लभते तदेवोद्भूततमोगुणमायावच्छिन्नं संहर्तृ महेश्वररुद्रादिशब्दाभिधेयतामधिगच्छति अथयोह खलु वा वास्य राजसोंशोऽसौ स योयंब्रह्मा अथयोह खलु वावास्य तामसोंशोऽसौसयोयंरुद्रः अथयोह खलु वावास्य सात्विकोंशोऽसौ सयोयंविष्णुरिति मैत्रेयोपनिषदि तथैवावगतेरित्यर्थः । उपास्यंतुत्रिगुणमायावच्छिन्नमेवविष्णुमहेशगणेशदिनेशदुर्गादिरूपेणस्थितं नत्वेकैकगुणप्रधानमायाविशिष्टमुपास्यंतस्य निरंकुशैश्वर्यवत्वाश्रवणादित्यादिद्रष्टव्यम् ॥

नन्वीश्वरसाक्षिणोऽनादित्वे "तदैक्षत बहुस्यां प्रजायेय" इत्यादिना सृष्टिपूर्वसमये परमेश्वरस्यागन्तुकमीक्षणमुच्यमानं कथमुपपद्यते । उच्यते । यथा विषयेन्द्रियसन्निकर्षादिकारणवशेन जीवोपाध्यन्तःकरणस्य वृत्तिभेदा जायन्ते तथा सृज्यमानप्राणिकर्मवशेन परमेश्वरोपाधिभूतमायाया वृत्तिविशेषा इदमिदानीं स्रष्टव्यमिदमिदानीं पालयितव्यमिदमिदानीं

संहर्तव्यमित्याद्याकारा जायन्ते । तासां च वृत्तीनां सादित्वात्तत्प्रतिबिम्बचैतन्यमपि सादीत्युच्यते । एवं साक्षिद्वैविध्येन प्रत्यक्षज्ञानद्वैविध्यं, प्रत्यक्षत्वं च ज्ञेय गतं ज्ञप्तिगतंचेति निरूपितम् ॥

नन्वीक्षणस्येश्वरसाक्षिणः सृष्टिपूर्वकालीनत्वप्रतिपादनात्तस्याना-दित्वं बाधितं तस्य सादित्वेईश्वरस्याप्यनादित्वं बाधितमिति शंकते (नन्विति) यथाभिव्यंजकान्तःकरणवृत्तेः सादित्वेनतत्प्रतिबिंबितजीवसा-क्षिस्वरूपज्ञानस्यापिसादित्वंतथेक्षणाद्यभिव्यंजकमायावृत्तेः सादितया-तत्प्रतिबिंबितेश्वरसाक्षिचैतन्यस्येक्षणादिज्ञानस्वरूपस्यापिसादित्वमतोन तयोः स्वतोऽनादित्वेबाधकमित्याशयेनाह ( उच्यत इति ) एवंसाक्षिद्वैवि-ध्यप्रतिपादनात्तस्यैवतत्तद्वृत्त्यनुगतस्यज्ञानत्वात्प्रत्यक्षज्ञानद्वैविध्यमपिसिद्ध मित्याह ( एवमिति ) एवंसाक्षिद्वैविध्यनिरूपणाज्जीवेश्वरसाक्षिजन्य प्रत्यक्षभेदेन प्रत्यक्षज्ञानस्यद्वैविध्यं सिद्धमिति तु न रम्यंज्ञप्तिगतं प्रत्यक्ष-त्वाचित्वमेवेत्युत्तरग्रंथविरोधात् । कंचिद्विशेषमभिधातुं वृत्तमनुवदति ( प्रत्यक्षत्वमिति ) ॥

तत्र ज्ञप्तिगतप्रत्यक्षत्वस्य सामान्यलक्षणं चित्त्वमेव पर्वतो वह्निमानित्यादावपि वह्न्याद्याकारवृत्त्युपहितचैत न्यस्य स्वात्मांशे स्वप्रकाशतया प्रत्यक्षत्वात्, तत्त द्विषयांशप्रत्यक्षत्वं तु पूर्वोक्तमेव, तस्य च भ्रान्तिरूप प्रत्यक्षे नातिव्याप्तिः, भ्रमप्रमासाधारणप्रत्यक्षत्वसा मान्यनिर्वचनेन तस्यापि लक्ष्यत्वात् । यदा तु प्रत्य क्षप्रमाया एव लक्षणं वक्तव्यं तदा पूर्वोक्तलक्षणेऽबाधि तत्वं विषयविशेषणं देयम् । शुक्तिरूप्यादिभ्रमस्य

**संसारकालीनबाधविषयप्रातिभासिकरजतादिविषयकत्वेनोक्तलक्षणाभावान्नातिव्याप्तिः ॥**

(तत्र)ज्ञेयगतज्ञप्तिगतप्रत्यक्षत्वयोर्मध्येनन्वनुमित्यादावतिव्याप्तिरित्याशंक्य सर्वत्रापि तत्तदाकारवृत्त्युपहितचैतन्यस्यस्वात्मांशे प्रत्यक्षत्वेन सर्वस्यापिज्ञानस्यलक्षत्वान्नातिव्याप्तिरित्याह ( पर्वतइति ) यत्साक्षादपरोक्षाद्ब्रह्मेत्यादिश्रुत्याचित्त्वस्यैवप्रत्यक्षत्वाभिधानाच्चिद्रूपस्य ज्ञानस्य स्वात्मांशे स्वप्रकाशतया सर्वस्यापि ज्ञानस्य प्रत्यक्षत्वादित्यर्थः । नन्वनुमित्यादौप्रत्यक्षत्वव्यवहारः कुतोनास्तीत्याशंक्य तत्तद्विषयांशनिरूपितप्रत्यक्षत्वप्रयोजकस्य पूर्वोक्तस्याभावादित्याशयेनाह ( तत्तदिति ) ननु योग्यविषयस्य स्वगोचरवृत्त्युपहितप्रमातृचैतन्यस्य सत्तातिरिक्तसत्ताशून्यस्य शुक्तिरूप्यादेर्ज्ञानेतिव्याप्तिरित्याशंक्याह ( तस्येति ) प्रत्यक्षप्रमाणनिरूपणे भ्रमप्रमासाधारणप्रत्यक्षत्वसामान्यनिर्वचनमनुपपन्नं मत्वाह ( यदेति ) प्रत्यक्षप्रमाया ज्ञेयगतस्ययथार्थप्रत्यक्षस्येत्यर्थः । नन्वबाधितत्वं पारमार्थिकत्वं उतसत्त्वमात्रं नाद्यः । घटादिज्ञानेव्याप्तेः नद्वितीयः शुक्तिरूप्यादिज्ञानेतिव्याप्तेस्तादवस्थ्यादित्याशंक्यसंसारदशायामबाधितत्त्वंविवक्षितमित्याह ( शुक्तीति ) भ्रमस्यभ्रांतिज्ञानस्यप्रातिभासिकत्वं प्रतीतिकालमात्रवृत्तित्वमिति यावत् । तथाचतदानीमनिर्वचनीयं रजताद्युत्पद्यते तस्य शुक्तिज्ञानबाध्यत्वात् तज्ज्ञानस्यबाधितविषयकत्वमिति भावः ॥

**ननु विसंवादिप्रवृत्त्या भ्रांतिज्ञानसिद्धावपि तस्य प्रातिभासिकतत्कालोत्पन्नरजतादिविषयकत्वे न प्रमाणं देशांतरीयरजतस्य क्लृप्तस्यैव तद्विषयत्वसंभवादितिचेत् । न । तस्यासन्निकृष्टतया प्रत्यक्षविषयत्वायोगात् न च ज्ञानं तत्र प्रत्यासत्तिः ज्ञानस्य प्रत्या**

सत्तित्वे तत एव वह्न्यादेः प्रत्यक्षत्वापत्तावनुमाना द्युच्छेदापत्तेः ॥

इदमसहमानोन्यथाख्यातिवादीशंकते ( नन्विति ) यद्यपिविसंवादिप्रवृत्त्याभ्रांतिज्ञानंसिध्यातितस्यचविषयं विनानुपपत्तिः तद्विषयंसाधयतितथापिसविषयः प्रातिभासिकस्तत्कालोत्पन्नइत्यत्रनास्तिप्रमाणमित्याह ( विसंवादीति ) यद्विषयकप्रवृत्तिस्तस्यलाभेतस्याः संवादित्वमलाभेतु विसंवादित्वं तच्चभ्रांतिजन्यप्रवृत्तेरित्त्यर्थः । ननु विषयांतरानुपपत्तिस्तत्र प्रमाणमित्याशंक्याह ( देशांतरीयेति ) असन्निकृष्टदेशांतरीयं वस्तु न प्रत्यक्षविषयत्वयोग्यमितिदूषयति ( नेति ) असन्निकृष्टस्य भ्रमेभानंनोपपद्यते प्रत्यक्षसामग्र्याःसन्निकर्षघटितत्वेन तद्राहितस्यप्रत्यक्षाविषयत्वायोगादितिभावः। नन्वस्तु अलौकिकः सन्निकर्षइत्याशंक्य सचकिंसामान्यात्मकः किंवाज्ञानरूप इति विकल्प्य ।नाद्यः। तत्रप्रमाणाभावात्सन्निकृष्टधूमादिकमेवप्रत्यक्षविषयीभूतं नतुतन्मात्रंयेन सामान्यंप्रत्यासत्तिरिति कल्पनास्यादितिप्रथमपक्षपरिहारम्मनसिनिधायद्वितीयंपक्षं परिहरति ( नचेति ) तत्रभ्रांतिप्रत्यक्षविषये ज्ञेयेन रजतादिनाज्ञानमेवसन्निकर्ष इति नच प्रमाणाभावादिंतिभावः। विपक्षेबाधकंहेतुमाह । ( ज्ञानस्येति ) ततएव ज्ञानलक्षणप्रत्यासत्तेरेव अलौलिकापिप्रत्यक्षसामग्री अनुमितिसामग्रीतोबलवतीलाघवादितिभावः ॥

ननु रजतोत्पादकानां रजतावयवानामभावे शुक्तौ कथं तवापि रजतमुत्पद्यते इतिचेत् । उच्यते । नहि लोकसिद्धसामग्री प्रातिभासिकरजतोत्पादिका किं तु विलक्षणैव। तथा हि। काचकामलादिदोषदूषितलोचनस्य पुरोवर्तिद्रव्यसंयोगादिदमाकारा चाकचिक्याकारा काचिदन्तःकरणवृत्तिरुदेति तस्यां च वृत्ताव

दमवच्छिन्नचैतन्यं प्रतिबिंबते। तत्र पूर्वोक्तरीत्या वृत्ते र्निर्गमनेनेदमवच्छिन्नचैतन्यं वृत्त्यवच्छिन्नचैतन्यं प्रमातृचैतन्यं चाभिन्नं भवति। ततश्च प्रमातृचैतन्या भिन्नविषयचैतन्यनिष्ठा शुक्तित्वप्रकारिकाविद्या चाकचिक्यादिसादृश्यसंदर्शनसमुद्बोधित रजतसंस्कारसध्रीचीना काचादिदोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमते ॥

नन्वेवं तर्हि अपूर्वरजतोत्पत्तिपक्षोऽप्यसंगतो रजतोपादानलौकिकतदवयवाभावात्। अलौकिकानां तेषां तदुपादानत्वे प्रमाणाभावादिति शंकते ( नन्विति ) अन्यथोपपत्त्यभावात्पारिशेष्याद्रजतोत्पत्त्यंगीकारस्यावश्यकत्वात्तदनुकूलातत्सामग्रीकल्पनीयेति समाधानं प्रतिजानीते ( उच्यतेइति ) लौकिकोपादानाभावात् रजतोत्पत्तिर्नसंभवतीतिनसांप्रतम् ॥ उपादानोपादेययोः सादृश्यावश्यंभावादलौकिकरजतोत्पादनेन लौकिक सामग्र्यपेक्षेत्याह ( नहीति ) तद्व्यतिरिक्तसामग्र्यभावात्पृच्छति ( किंत्विति ) यथाप्रातिभासिकंरजतंलौकिकरजतविलक्षणंतथातदुत्पादिकासामग्र्यपिलोकप्रसिद्धसामग्रीतोविलक्षणैवेत्युत्तरमाह ( विलक्षणेति ) तर्हि तत्स्वरूपं वक्तव्यमित्यपेक्षायां प्रतिज्ञातमर्थमुपपादयति। ( तथाहीति ) तत्र चैतन्ये प्रतिबिंबितेसति पूर्वोक्तरीत्या तडागोदकमित्याद्युक्तरीत्या ततश्च त्रिविधचैतन्याभेदसंपत्त्यनंतरंच अविद्या रजतरूपार्थाकारेणरजतज्ञानाभासाकारेणचपरिणमतइत्यन्वयः ननु अविद्याया एवाकाशादिप्रपंचोपादानत्वाभ्युपगमात्प्रतिज्ञाहानिरित्याशंकानिरासाय प्रमातृचैतन्येत्यादिविशेषणद्वयम् ननु यथोक्ताविद्यासर्वदायथोक्ताकारेणकुतोनपरिणमत इतिचेत्, निमित्तकारणविरहादित्यभिप्रेत्यनिमित्तकारणमाह ( रजतसंस्कारेति ) यद्यपिसंस्कारोपि सर्वदावर्त्तते तथाप्युद्बोधितस्यनिमित्ततेत्यभिप्रेत्योक्तम् ( चाकचिक्यादीति )

चाकचिक्यादेः सादृश्यस्यसंदर्शनेन समुद्बोधितोरजतसंस्कारस्तल्लक्षणया-सामग्र्यासहकृता, ननुचाकचिक्यादिसादृश्यसंदर्शनेनीलपृष्टत्रिकोणता-ऽदर्शनेचकिंनिमित्तमित्यपेक्षायामाह ( काचादीति ) नेत्रनिष्ठकाचादिदो-षसंयुक्तापरिणमतइत्युक्तम् ॥

**परिणामो नाम उपादानसमसत्ताककार्यापत्तिः। विवर्तोनाम उपादानविषमसत्ताककार्यापत्तिः।प्रातिभासिकरजतं चाविद्यापेक्षया परिणामः चैतन्यापेक्षयाविवर्त इति चोच्यते।अविद्यापरिणामरूपं च तद्रजतमविद्याधिष्ठाने इदमवच्छिन्नचैतन्ये वर्तते।अस्मन्मते सर्वस्यापि कार्यस्य स्वोपादानाविद्याधिष्ठानाश्रितत्वनियमात्। ननु चैतन्यनिष्ठस्य रजतस्य कथमिदंरजतमिति पुरोवर्तितादात्म्यम् ॥**

तत्रकिंलक्षणःपरिणामइत्यपेक्षायां तल्लक्षणमाह ( परिणामइति ) यदभिन्नंकार्य्यमुत्पद्यते तदुपादानकरणं तेन समासत्तायस्यकार्यस्य तथाभूतकार्यस्यापत्तिः यथोक्तकार्याकारेणोद्भवोयथाव्यावहारिकसत्ताक-दुग्धेतत्समसत्ताकदधिरूपकार्यापत्तिरित्यर्थः विवर्तेऽतिव्याप्तिवारणाय समसत्ताकेति समसत्ताकपदव्यावर्त्यत्वात् वक्ष्यमाणोपयुक्तत्वाच्च विवर्तं लक्ष-यति ( विवर्तोनामेति ) उपादानाद्विषमासत्तायस्यकार्यस्यतदापत्ति-परिणामेतिव्याप्तिनिरासायविषमसत्ताकेत्युक्तं प्रातिभासिकरजतादेः परि-णामत्वंविवर्तत्वंचास्तीत्याह ( प्रातिभासिकेति) नन्वविद्यापरिणामस्य रजतस्याविद्यायां तादात्म्यसंबंधेन वर्तमानस्यचैतन्ये तत्संबंधेनावर्तमा-नत्वाच्चैतन्योपादानकत्वासंभवात्। कथमुक्तविवर्तता रजतस्येत्याशंक्या-विद्यापरिणामस्यतदधिष्ठानाश्रितत्वनियमान्नोक्तदोष इत्याह ( अवि-द्येति ) नन्वेवं तर्हिपुरोवर्तितादात्म्यप्रत्ययानुपपत्तिरिति शंकते । ( नन्विति ) ॥

उच्यते । यथा न्यायमते आत्मनिष्ठस्य सुखादेः शरीरनिष्ठत्वेनोपलंभः शरीरस्यसुखाद्यधिकरणतावच्छेदकत्वात् तथा चैतन्यमात्रस्य रजतं प्रत्यनधिष्ठानतया इदमवच्छिन्नचैतन्यस्य तदधिष्ठानत्वेनेदमोवच्छेदकतया रजतस्य पुरोवर्तिसंसर्गप्रत्यय उपपद्यते तस्य च विषयचैतन्यस्य तदन्तःकरणोपहितचैतन्याभिन्नतया विषयचैतन्याध्यास्तमपि रजतं साक्षिण्यध्यस्तं केवलसाक्षिवेद्यं सुखादिवदनन्यवेद्यमिति चोच्यते। ननु साक्षिण्यध्यस्तत्वेऽहं रजतमिति प्रत्ययः स्यात्, अहं सुखीतिवदितिचेत् ॥

अविद्यापरिणामस्याविद्याधिष्ठानाश्रितत्ववच्चैतन्याध्यस्तस्य रजतादेः तदवच्छेदकपुरोवर्तितादात्म्यप्रत्ययोपपत्तिरित्याशयेन समाधत्ते ( उच्येतेइति ) ब्राह्मणोहं सुखी ममदेहः सुखीत्येवं शरीरनिष्ठत्वेन देहस्यात्मनि सुखाद्युपलब्ध्यवच्छेदकत्ववदिदमश्चैतन्ये रजताध्यासस्यावच्छेदकत्वादुक्तप्रत्यय उपपद्यत इत्याह ( तथाचैतन्येति ) नन्विदमवच्छिन्नचैतन्याध्यस्तरजतादेः साक्षिण्यनध्यस्ततया तस्य केवलसाक्षिवेद्यता सुखादेरिवानन्यवेद्यताच सांप्रदायिकैरुच्यमाना कथमुपपद्यत इत्याशंक्याह ( तस्यचेति ) ननु सुखादीनामवच्छेदकशरीरनिष्ठत्वेनोपलंभो न सर्वदा अहं सुखीत्यात्मनिष्ठत्वेनाप्युपलंभदर्शनात्। तथारजतादेरप्यंतःसाक्षिण्यध्यस्तत्वाभ्युपगमादहंमनुष्य इतिवदहं रजतमहं सुखीति वदहंरजतवान् इत्येवं वा प्रत्ययः कदापि कुतो न भवति इत्याशंकते । ( नन्विति ) ॥

उच्यते । नहि सुखादीनामन्तःकरणावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वप्रयुक्तम् अहं सुखीतिज्ञानं सुखादी

**नायंघटादिवच्छुद्धचैतन्य एवाध्यासात्, किन्तु यस्य यदाकारानुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वं तस्य तदाकारानुभवविषयत्वमित्येवानुगतनियामकम् ।तथा च इदमाकारानुभवाहितसंस्कारसहकृताविद्याकार्य्यत्वात्,घटादेरिदमाकारानुभवविषयत्वम् । अहमाकारानुभवाहितसंस्कारसहिताविद्याकार्य्यत्वादन्तःकरणादेरहमाकारानुभवविषयत्वम् । शरीरेन्द्रियादेरुभयविधानुभवसंस्कारसहिताविद्याकार्यत्वादुभयविधानुभवविषयत्वम् । तथा चोभयविधोनुभव इदं शरीरमहं देहोऽहं मनुष्योऽहंब्राह्मण इदं चक्षुरहं काण इदंश्रोत्रमहंबधिर इति ॥**

नहियत्रयदज्ञानाध्यासस्तस्य तन्निष्ठाविद्याकार्यत्वप्रयुक्तं तन्निष्ठतयैव भानमितिनियमः संभवति सुखादेर्घटादिवत् शुद्धचैतन्याध्यस्तत्वेप्यहंसुखीति प्रत्ययदर्शनात् इत्याशयेनसमाधत्ते ( उच्यतइति ) तर्हिघटादेः सुखादेः शुक्तिरूप्यादेश्च तत्तत्प्रतीतिविषयत्वे पृथक् पृथक् नियामकमुतैकमितिपृच्छति ( किंत्विति ) नाना नियामकाभ्युपगमे गौरवादनुगतैकनियामकस्वीकार उचित इत्युत्तरमाह ( यस्येति ) उक्तनियामकंसर्वत्रयोजयति ( तथाचेति ) निरुक्तानुगतनियामकेसति अयंघट अहमितीदमाकारानुभवस्याहमाकारानुभवस्यच स्पष्टत्वमभिप्रेत्योभयविधाकारानुभवमावेदयति ( तथाचेति ) यस्योभयविधानुभवस्यविषयत्वदेहेन्द्रियादेः सचोभयविधानुभवएवमित्यर्थः ॥

**प्रकृते च प्रातिभासिकरजतस्य प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वेपि इदं रजतमि**

प्रतीतिमात्र

---

१ ज्ञानम् ।

ति सत्यस्थलीयेदमंशाकारानुभवाहितसंस्कारजन्य त्वादिदमाकारानुभवविषयता नत्वहं रजतमित्यहमा कारानुभवविषयतेत्यनुसंधेयम्। नन्वेवमपि मिथ्या-रजतस्य साक्षात्साक्षिसंबंधितया भानसंभवे रजतगोचरज्ञानाभासरूपाया अविद्यावृत्तेरभ्युपगमः किमर्थ इति चेत्, स्वगोचरवृत्त्युपहितचैतन्याभिन्नसत्ताकत्वाभावस्य विषयापरोक्षरूपतया रजतस्यापरोक्षत्वसिद्धये तदभ्युपगमात्॥

निरुक्तनियामकं प्रकृते योजयति ( प्रकृतेचेति ) यद्यपिशुक्तिरूप्यादेः प्रमातृचैतन्याभिन्नेदमंशावच्छिन्नचैतन्यनिष्ठाविद्याकार्यत्वमस्ति तथापि तत्सहकारिकारणं इदंरजतमित्यादिसत्यरजतस्थलीयेदमाकारानुभवाहितसंस्कारोऽतस्तस्येदमाकारानुभवविषयत्वं नत्वहमनुभवविषयत्व मितिभावः।नन्वस्तुशुक्तिरूप्यस्येदमाकारानुभवविषयत्वं तथापि नतद्विषयाविद्यावृत्तिराश्रयणीया तस्यसाक्षादनावृत्तसाक्षिसंबंधितयापरोक्षभानसंभवादिति स्वयूथ्यंशंकते ( नन्वेवमपीति ) यद्यपिसाक्ष्यध्यस्तरजतस्यसाक्षिचैतन्याभिन्न सत्ताकत्वमस्ति तथापि नतस्यापरोक्षत्वंसंभवति साक्षिचैतन्यस्यरजतगोचरवृत्त्युपहितत्वाभावात्तस्मात्तदपरोक्षतार्थमविद्यावृत्तेरावश्यकतेतिसमाधत्ते ( नेति ) चैतन्यभिन्नसत्ताकत्वाभावस्य चैतन्याभिन्नसत्ताकत्वस्य॥

नन्विदंवृत्तेरजताकारवृत्तेश्च प्रत्येकमेकैकविषयत्वे गुरुमतवत् विशिष्टज्ञानानभ्युपगमे कुतो भ्रमज्ञान सिद्धिरितिचेत्।वृत्तिद्वयप्रतिबिंबितचैतन्यस्यैकस्य सत्यमिथ्यावस्तुतादात्म्यावगाहित्वेन भ्रमत्वस्य

स्वीकारात् । अत एव साक्षिज्ञानस्य सत्यासत्यविष यतया प्रामाण्यानियमात् अप्रामाण्योक्तिः सांप्रदा यिकानाम् ॥

संगता

नन्वेवमेकं संधातुंप्रवृत्तस्यापरंहीयत इतिन्यायापातःरजतापरोक्षतासिद्धये विद्यावृत्त्युभ्युपगमेप्राभाकरमतवद्विशिष्टज्ञानानभ्युपगमप्रसंगेन रजतज्ञानस्य भ्रमत्वहानात् प्राभाकरमतेहीदं रजतमित्यत्रज्ञाने[1]द्वयमंगीकृतम् । तत्रेदमितिपुरोवर्तिविषयमनुभवात्मकं ज्ञानं रजतमित्यसन्निकृष्टरजतविषयं स्मरणात्मकं अतो वस्तुद्वयतादात्म्यावगाहिविशिष्टज्ञानं क्वापिनास्तीति सर्वमपिज्ञानंयथार्थमेवेति भ्रमज्ञानासिद्धिस्तद्वद्त्वन्मतेपि वृत्तितद्विषयभेदाभ्युपगमे वस्तुद्वयतादात्म्यावगाह्येकज्ञानानभ्युपगमात् । भ्रमज्ञानं नसिध्यतीति सएवशंकते ( नन्विदमिति ) वृत्तिभेदेपिनास्ति ज्ञानभेदस्तयोरेकदेशस्थत्वेन तत्प्रतिबिंबितचैतन्यस्यैकत्वान्नैवमित्याह ( नेति ) यतएकस्यैवसाक्षिज्ञानस्य सत्यासत्यवस्तुविषयत्वमत एवतस्याप्रामाण्योक्तिः सांप्रदायिकानां संगता इत्याह ( अतएवेति ॥

ननु सिद्धांते देशांतरीयरजतमप्यविद्याकार्य्यमध्य स्तंचेति कथं शुक्तिरूप्यस्य ततोवैलक्षण्यमितिचेत्। न।त्वन्मते सत्यत्वाविशेषेपि केषांचित्क्षणिकत्वं केषांचित्स्थायित्वमित्यत्र यदेव नियामकं तदेव स्वभाव विशेषादिकं ममापि।यद्वा।घटाद्यध्यासे अविद्यैवदोष त्वेनापिहेतुः । शुक्तिरूप्याद्यध्यासेतु काचादयोदोषा अपि तथाचागंतुकदोषजन्यत्वं प्रतिभासकत्वे प्रयो जकम् ।अत एव स्वप्नोपलब्धरथादीनामागंतुकनिद्रा दिदोषजन्यत्वात्प्रातिभासिकत्वम् ॥

---

१ ज्ञानद्वयंस्मरणानुभवात्मकम् ॥

नन्वेवं महता प्रयासेन शुक्तिरूप्यस्याविद्याकार्यत्वाध्यस्तत्वसाधनं देशांतरीयरजताद्वैलक्षण्यसिद्ध्यर्थं, तच्च न संभवति, भवत्सिद्धांते देशांतरीयरजतादेरपितथात्वाभ्युपगमात् । तथाचोपलभ्यमानवैलक्षण्येकोहेतुरितिनैयायिकः शंकते ( ननुसिद्धांतइति ) त्वन्मतेसत्यत्वाविशेषेपिशब्दज्ञानेच्छादीनांक्षणिकत्वं घटादीनां स्थायित्वमितिवैलक्षण्ये यन्नियामकं तदेवममाप्यस्त्वितिपरिहरति ( नेति ) कालान्तरोपलंभानुपलंभादिकमादिपदेनगृह्यते । तथाच पक्षद्वयेपि दोषपरिहारयोःसमत्वादेकस्यनियोगोनुपपन्नइतिभावः।ममत्वन्यदपिवैलक्षण्यनियामकमित्याशयेनाह (यद्वेति) अतएवागंतुकदोषजन्यत्वस्यप्रातिभासिकत्वप्रयोजकत्वादेव ॥

**ननु स्वप्नस्थले पूर्वानुभूतरथादेः स्मरणमात्रेणैवव्यवहारोपपत्तौ न रथादिसृष्टिकल्पनं गौरवादितिचेत्, न, रथादेःस्मरणमात्राभ्युपगमे रथं पश्यामि स्वप्ने रथमद्राक्षमित्याद्यनुभवविरोधापत्तेः "अथरथान् रथयोगान् पथः सृजते" इति रथादिसृष्टिप्रतिपादकश्रुतिविरोधापत्तेश्च। तस्माच्छुक्तिरूप्यवत् स्वप्नोपलब्धरथादयोपि प्रातिभासिकाः यावत्प्रतिभासमुपतिष्ठंते॥**

ननुस्वप्नोपलब्धरथादीनांप्रातिभासिकत्वाभ्युपगमेतेषां तात्कालिकोत्पत्तिरायाता साचानुपपन्ना स्मरणमात्रेणलब्धव्यवहारोपपत्त्यासृष्टिकल्पनानौचित्यादित्यख्यातिवादी शंकते ( ननुस्वप्नेति ) प्रतीतिविरोधान्मैवमित्याह ( नेति ) स्वप्नेरथादेः स्मरणमात्रमस्तीत्ययुक्तं रथं पश्यामि गीतं शृणोमीत्याद्यनुभवविरोधात् । ननु दोषवशात् स्मरामीत्यस्य प्रमोषात्पश्यामीत्याद्याकाराप्रतीतिरित्याशंक्याह ( स्वप्नइति ) दोषनिवृत्तिकालेपि स्वप्नेरथमद्राक्षमित्येवप्रतीतिर्नतुस्मृतवानितिप्रतीतिरत उक्तप्रत्ययव्यवहारस्य नस्मृतिमात्रादुपपत्तिरितिभावः।अत्रानुभवपदं प्रतीतिपरं, ननु जाग्रत्कालीनप्रतीतिरपि न विरुद्ध्यते, स्वप्ने स्मृतेरनुभवाका-

रतयोत्पन्नत्वेन तथैवपरामर्शौचित्यात् । तस्माद्गौरवग्रस्तरथादिसृष्टिर्नक-ल्पनीयेत्याशंक्याह ( अथेति ) जाग्रद्भोगप्रदकर्मोपरमेस्वाप्नभोगप्रद-कर्माभिव्यक्त्यनंतरं रथान् रथयोगान् तदुपकरणभूतानश्वादीन् तद्योग्य-मार्गांश्चसृजत इति तत्सृष्टिप्रतिपादकश्रुत्यागौरवस्य प्रामाणिकतयोक्त-प्रतीतेरन्यथानयनमयुक्तमितिभावः । उक्तश्रुतिविरोधादन्यथाख्यातिरप्य-युक्तेति मनसि निधायोपसंहरति । ( तस्मादिति ) प्रातिभासिकपदवि-वरणंयावत्प्रतिभासमवतिष्ठंत इतिप्रतिभासनियतसत्ताकाइतियावत् ॥

ननु स्वप्नरथाद्याधिष्ठानतयोपलभ्यमानदेशविशेष स्यापि तदा सन्निकृष्टतयाऽनिर्वचनीयप्रातिभासिकदे शोऽभ्युपगंतव्यः । तथाच रथाद्यध्यासः कुत्रेतिचेन्न चैतन्यस्य स्वयंप्रकाशस्य रथाद्यधिष्ठानत्वात्प्रतीय मानरथाद्यस्तीत्येवप्रतीयते इति सद्रूपेणप्रकाशमानं चैतन्यमेवाधिष्ठानं देशविशेषोपि चिदध्यस्तः प्राति भासिकः रथादाविन्द्रियग्राह्यत्वमपि प्रातिभासिकम्। तदा सर्वेन्द्रियाणामुपरमात्। 'अहं गज' इत्यादिप्रती त्यापादनंतु पूर्ववन्निरसनीयम् ॥

ननु शुक्तिरूप्यादेर्यथापुरोवर्तिवस्त्वधिष्ठानं तथास्वप्नरथादेरप्यधिष्ठानं वक्तव्यम् । तत्किंचैतन्यमुतदेशविशेषः । आद्येपि तत्किंशुद्धमुतान्तः करणावच्छिन्नं नोभयमपि तयोरधिष्ठानत्वेनाप्रतीतेः।द्वितीयेपि सकिंबा-ह्यउतस्वाप्निकः । नाद्यः, तस्यासन्निकृष्टतया प्रत्यक्षज्ञानविषयत्वायोगात् । नद्वितीयः, अधिष्ठानतयोपलभ्यमानस्यापि तस्य सन्निकृष्टतया प्राति-भासिकत्वावश्यंभावेनाधिष्ठानसापेक्षतया तत्त्वायोगादित्याशयेन शंकते ( ननुस्वप्नेति ) तदास्वप्नावस्थायां रथाद्यधिष्ठानतयोपलभ्यमानदेशवि-शेषस्यापि सन्निकृष्टतयानिर्वचनीयप्रातिभासिकदेशोभ्युपगन्तव्य इत्य-

न्वयः। प्रथमपक्षमवलंब्यपरिहरति(नेति)ननु चैतन्यस्य पुरोवर्तिवत् वृत्त्यवच्छिन्नज्ञानविषयत्वाभावात् कथमधिष्ठानता इत्याशंक्याह ( स्वयंप्रकाशेति ) स्वप्रकाशपरप्रकाश्यसाधारणं ज्ञायमानत्वमेवाधिष्ठानत्वप्रयोजकंलाघवादितिभावः। ननु स्वयंप्रकाशस्यापि तस्य न तदाचिद्रूपेणभानं रथादिजडाद्यधिष्ठानत्वनिर्वाहकं प्रतिकूलरूपत्वान्नाप्यानंदरूपेणतस्य मूलाज्ञाननिवृत्तिमंतराभानासंभवादित्याशंक्याह ( प्रतीयमानेति ) अत्रायं रथ इत्यधिष्ठानतया प्रतीयमानस्यापि देशविशेषस्यप्रत्तिभासकत्वान्नाधिष्ठानतेत्याह ( देशविशेषोपीति ) किंच इन्द्रियग्राह्यत्वमपितत्रकल्पितमित्याह ( रथादाविति ) तत्र हेतुमाह ( तदेति ) ननु स्वप्नगजाद्यधिष्ठानं यद्यपिचैतन्यम्। तथापि तस्यांतःकरणावच्छिन्नत्वमस्त्येव सधीः "स्वप्नोभूत्वेमंलोकमनुसंचरेत्" इतीत्यादिश्रुतेः।तथाचाहंगज इतिप्रतीत्यापत्तिरित्याशंक्याह ( अहंगजइति ) ( पूर्ववदिति ) यथाशुक्तिरजतादेरिदमाकारानुभवाहितसंस्कारसहकृताविद्याजन्यत्वादहंरजतमिति प्रतीत्यापादानमयुक्तं तद्वदहंगज इति प्रतीत्यापादनमपीत्यर्थः ॥

स्वप्नगजादयः साक्षान्मायापरिणामा इति केचित्, अन्तःकरणद्वारा तत्परिणामा इत्यन्ये। ननु गजादेः शुद्धचैतन्याध्यस्तत्वे इदानीमधिष्ठानसाक्षात्काराभावेन जागरणेपि स्वप्नोपलब्धगजादयोऽनुवर्तेरन् । उच्यते । कार्यविनाशोहि द्विविधः, कश्चिदुपादानेन सह कश्चिद्विद्यमान एवोपादाने आद्यो बाधः। द्वितीयस्तु निवृत्तिः। आद्यस्य कारणमधिष्ठानतत्त्वसाक्षात्कारः;तेन विनोपादानभूताया अविद्याया अनिवृत्तेः, द्वितीये विरोधिवृत्त्युत्पत्तिर्दोषनिवृत्तिश्च। तदिह ब्रह्मसाक्षात्काराभावात् स्वप्नप्रपंचो मावाधिष्ठमुसलप्र

**हारेण घटादेरिव विरोधिप्रत्ययांतरोदयेन स्वप्नजनकीभूतनिद्रादिदोषनाशेन वा गजादिनिवृत्तौ कोविरोधः॥**

ननु स्वप्नगजादेस्तत्कालोत्पन्नत्वमनुपपन्नं तेषामुपादानासंभवात्। नतावच्चैतन्यंतदुपादानं तस्यापरिणामित्वात्। नापिमूलाविद्यातस्यास्तत्तदवयवसापेक्षायाः साक्षात्तदुपादानत्वासंभवात्, नापितूलाविद्या तस्याबाह्यदेशावच्छिन्नचैतन्याश्रितायास्तत्वादित्याशंक्याह ( स्वप्नगजादयइति ) मायापरिणामा मूलाविद्योपादानकाः स्वप्नगजादीनां प्रातिभासिकत्वान्नलौकिकावयवापेक्षा नचैवं सुषुप्तौ तत्प्रतिभासापत्तिरितिवाच्यम्। रागद्वेषादिवन्निमित्तकारणस्यांतःकरणस्य तदानीमभावात् । अन्तःकरणस्य निमित्तकारणत्वकल्पनापेक्षया तद्वाराविद्यापरिणामित्वकल्पनं वरं इत्यभिप्रायवतां पक्षमाह ( अन्तःकरणेति ) नन्वध्यस्तस्याधिष्ठानसाक्षात्कारनिवर्त्यत्वनियमात् तत्साक्षात्काराभावाज्जागरणेतेषामनुवृत्तिप्रसंगोदुर्वार इतिशंकते ( ननुगजादेरिति ) यद्यप्यधिष्ठानसाक्षात्कारं विनाऽध्यस्तस्यबाधोनसंभवति तथापि तंविनापि तन्निवृत्तिसंभवात् नतदनुवृत्तिप्रसंग इति समाधानं प्रतिजानीते ( उच्यतेइति ) बाधरूपनाशाभावेपि निवृत्तिरूपनाशंप्रकृतेदर्शयितुं नाशद्वैविध्यमाह (कार्यविनाशोहीति) उपादानेनाज्ञानेन आद्यस्य बाधसंज्ञस्यउपादानेनसहनाशस्यतत्तस्मान्नाशस्यद्वैविध्याद्धेतोरिह जागरणे ब्रह्मसाक्षात्काराभावात् । स्वप्नप्रपंचोमावाधिष्ठगजादिनिवृत्तौकोविरोधइत्यन्वयः। तत्रहेतुमाह ( विरोधीति ) यथोपादानसत्वेपिमुशलप्रहारेण घटादिनिवृत्तिर्भवति तथाविरोधिवृत्त्यंतरोदयेन गजादेरपि निवृत्तिरुपपद्यते स्वप्नएवअश्वादिप्रत्ययेगजादिनिवृत्तिदर्शनात् विरोधिवृत्त्यंतरनिवृत्तौ पुनरुत्पत्तिमाशंक्य हेत्वन्तरमाह (स्वप्नजनकीभूतेति ) स्वप्नप्रतीतिजनकीभूतत्यर्थः।आदिपदेनादृष्टादिसंग्रहः ॥

**एवं च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यनिष्ठतूलाविद्याकार्यत्वपक्षे शुक्तिरिति ज्ञानेन तदज्ञानेन**

सह रजतस्य बाधः । मूलाविद्याकार्य्यत्वपक्षेतु मूला विद्याया ब्रह्मतत्त्वसाक्षात्कारमात्रनिवर्त्यतया शुक्ति त्वज्ञानेनानिवर्त्यतया रजतस्य तत्र शुक्तिज्ञानान्नि वृत्तिमात्रं मुसलप्रहारेण घटस्येव । ननु शुक्तौ रज तस्य प्रतिभाससमये प्रातिभासिकसत्त्वाभ्युपगमे नेदंरजतमिति त्रैकालिकनिषेधज्ञानं न स्यात् । किंत्विदानीं इदं न रजतमिति इदानीं घटः श्यामो नेति वदितिचेत्,न,नहि तत्र रजतत्वावच्छिन्नप्रतियो गिताकाभावो निषेधधीविषयः किंतु लौकिकपारमा र्थिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकःव्य धिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाभ्युपगमात् ॥

ननु शुक्तिरूप्यस्यबाधोनिवृत्तिर्वेत्यपेक्षायामाह ( एवंचेति ) कार्य्य नाशस्य द्वैविध्ये सिद्धे सति शुक्तिरितिज्ञानेनेति नेदं रजतमितिज्ञानं त्वनुवादः शुक्तित्वप्रकारकज्ञानस्यरजतादिभेदाज्ञाननिवर्तकत्त्वात् । तदुक्तं पंचपादिकायां शुक्तित्वज्ञानमेवबाधकं नेदंरजतमित्यनुवादइति रजत-स्यबाधः उपादानेनसहनाशः तूलाविद्याश्चमूलाज्ञानस्यैवावस्थाविशेषास्त-द्ुक्तंविवरणे मूलाज्ञानस्यैवावस्थाभेदारजताद्युपादानानिशुक्तिकादिज्ञानैः सहाध्यासेन निवर्तंते इति मूलाविद्याकार्यत्वपक्षेतुस्वप्नगजादिवन्निवृत्ति-रित्याह (मूलाविद्येति) नन्वस्मिन्पक्षे शुक्तिरूप्यज्ञानेप्रमात्वप्रसंगः संसा-रदशायामबाधितत्वघटितस्य लक्षणस्य सत्त्वादितिचेन्नाबाधितपदेनागंतु-कदोषाजन्यस्य विवक्षितत्वात् । ननु शुक्तिरजतस्याविद्याकार्य्यत्वात् प्रतिभाससमयेसत्वस्वीकारेनेदंरजतमिति त्रैकालिकनिषेधानुपपत्तिरिति शंकते ( ननुशुक्ताविति ) विषयभेदादविरोध इति परिहरति ( नेति )

हियस्मात्तत्रनेदं रजतमिति. त्रैकालिकनिषेधज्ञाने रजतत्वावच्छिन्नप्रतियोगिताकाभावो निषेधज्ञानाविषयो न भवति तर्हि कीदृशो भावस्तद्विषय इतिपृच्छति ( किंत्विति ) व्यावहारिकत्वावच्छिन्नप्रातिभासिकरजतप्रतियोगिताकोभावोनिषेधबुद्धिविषयः, तत्र हेतुमाह ( व्यधिकरणेति ) विरुद्धं व्यावहारिकं रजताद्याधिकरणं यस्यसव्यधिकरणः सचासौधर्मश्च लौकिकपारमार्थिकत्वं तदवच्छिन्नाप्रातिभासिकरजते प्रतियोगिता यस्य तादृशाभावस्याभ्युपगमात् ॥

ननु प्रातिभासिके रजते पारमार्थिकत्वमवगतं नवाऽनवगमे प्रतियोगितावच्छेदकावच्छिन्नरजततत्त्वज्ञानाभावादभावप्रत्यक्षानुपपत्तिः अवगमेऽपरोक्षावभासस्य तत्कालीनविषयसत्तानियतत्वात् । रजते पारमार्थिकत्वमप्यनिर्वचनीयं रजतवदेवोत्पन्नमिति तदवच्छिन्नरजतसत्त्वे तदवच्छिन्नाभावस्तस्मिन् कथं वर्तते इति चेत्,न, पारमार्थिकत्वस्याधिष्ठाननिष्ठस्य रजते प्रतिभाससंभवेन रजतनिष्ठपारमार्थिकत्वोत्पत्त्यनभ्युपगमात् । यत्रारोप्यमसन्निकृष्टं तत्रैव प्रातिभासिकवस्तूत्पत्तेरंगीकारात् ॥

नन्विदमनुपपन्नं व्यधिकरणधर्मस्यावगमेऽनवगमे चानुपपत्तेरितिशंकते। ( नन्विति ) अवगमपक्षमवलंब्य परिहरति ( नेति ) नन्वत्र लौकिकपारमार्थिकत्वोत्पत्तिः कुतो नाभ्युपगम्यत इत्याशंक्याह ( यत्रेति ) ॥

अत एवेन्द्रियसन्निकृष्टतया जपाकुसुमगतलौहित्यस्य स्फटिके भानसंभवात् न स्फटिकेऽनिर्वचनीयलौहित्योत्पत्तिः नन्वेवं यत्र जपाकुसुमं द्रव्यांतरव्यव

**धानादसन्निकृष्टं तत्र लौहित्यप्रतीत्या प्रातिभासिक लौहित्यं स्वीक्रियतामितिचेत्, न, इष्टत्वात् । एवं प्रत्यक्षभ्रमांतरेष्वपि प्रत्यक्षसामान्यलक्षणानुगमो यथार्थप्रत्यक्षलक्षणासद्भावश्च दर्शनीयः ॥**

यत एव मत एवयत्रारोप्यंसन्निकृष्टं न तत्रप्रातिभासिकवस्तूत्पत्तिः स्वीक्रियत इत्याह ( अतएवेति ) ननु सन्निकृष्टमपिजपाकुसुमहस्तादिद्रव्यांतरव्यवधानादसान्निकृष्टं तत्र स्फटिकेनिर्वचनीयलौहित्योत्पत्तिरंगीकार्येति शंकते ( नन्विति ) इष्टापत्त्यापरिहरति ( नेति ) नन्विंद्रियसन्निकृष्टप्रभायाः स्फटिके भानसंभवादनिर्वचनीयलौहित्योत्पत्तिरनुपपन्नेति चेन्नस्वच्छद्रव्यस्यजपाकुसुमस्य प्रभाया एवासिद्धे तदुक्तं पंचपादिकायां यथापद्मरागादिप्रभानिराश्रयाप्युन्मुखोपलक्ष्यते न तथा जपाकुसुमादेरिति तथाचासन्निहितस्य परत्रावभासोध्यास इत्यध्यास लक्षणं नक्कापि व्यभिचरितमितिभावः। ननु शुक्त्यादौ रजताध्याससंभवेप्यहंकारादेरात्मनि स न संभवति तस्याधिष्ठानत्वानुपपत्तेः; । अधिष्ठानं ह्यध्यस्यमानसदृशमंशद्वयवत्परिच्छिन्नमध्यस्यमानेन सहैकज्ञानविषयत्वयोग्यंचदृष्टमितिचेदुच्यते अहंकारादिकार्य्यंह्यज्ञानादिकोलिपतएवाध्यस्यते कार्य्यस्य कारणावच्छिन्न एवाध्यासौचित्यात् नचैतावतासमानाश्रयत्वभंगः बिंबप्रतिबिंबयोरेकत्वेनतद्भंगाभावात् तस्मादहंकाराद्यधिष्ठानचैतन्यस्याभिधेयत्वादिसंभवात् । प्रतीतितो घटादिव्यावृत्तत्वाकारेणाप्यहंकारादिभिरात्मनः सादृश्यसंभवादविद्यया सांशत्वंविषयत्वपरिच्छिन्नत्वानामपि संभवादात्माधिष्ठानंभवत्येव, नापि प्रमाणदोषाभावःअविद्याया एवदोषत्वात्। नचात्मनोविषयत्वादिसमाश्रयणेऽपसिद्धांतःशंक्यःअमुख्यस्य तस्यनतावदयमेकांतेनाविषयोस्मत्प्रत्ययविषयत्वादित्यादिवदद्भिर्भाष्यकारैरेवसमाश्रितत्वात् । किंचाव्यवधानेन प्रकाशमानत्वमेवाधिष्ठा-

---

१ अज्ञानप्रतिबिंबे । २ अमुख्यस्यवृत्तिरूपज्ञानस्यतस्यविषयत्वस्य ।

नत्वप्रयोजकं नत्वधिष्ठानस्य विषयत्वमपिगौरवात्, नच विषयत्वं विना-धिष्ठानस्याऽव्यवधानेन प्रकाशमानत्वमेवनदृष्टमिति वाच्यम् ॥ यथाधिष्ठा-नस्यापरोक्षत्वं परमतेक्कचिन्मनसाक्कचिन्नेत्राभ्यां तथास्मन्मतेस्वतोपी-त्यत्रबाधकाभावात् ननुस्वतोऽपरोक्षेकस्याध्यासो दृष्ट इति चेदज्ञानशोक-मोहस्वप्रादेरितिगृहाण तथाच परैर्यथाक्षिगम्येशुक्तिकादौरजतादिवि-भ्रमः स्वीकृतस्तथास्वतोऽपरोक्ष आत्मन्यहंकारादिविभ्रमेपि नास्तिबा-धकम्। ननु स्वयं प्रकाशस्यात्मनोज्ञाताज्ञातांशासंभवात्कथमधिष्ठानतेतिचे-दुच्यते दूरस्थयोर्वृक्षत्वेनप्रतीयमानयोरपितावन्मात्रस्वरूपोभेदो न ज्ञा-यत इत्यंगीकार्यम्।अन्यथाभेदभ्रांत्यनुदयापातादेवं ज्ञातेप्यात्मन्याज्ञातत्व संभवात्तस्याधिष्ठानत्वमुपपद्यते । भेदोहि वस्तुनः स्वरूपं न धर्मः अन्यो-न्याश्रयापातादित्यन्यत्रविस्तरः।उक्तमर्थमन्यत्राप्यतिदिशति (एवमिति) प्रत्यक्षभ्रमांतरेषु पीतः शंखस्तिक्तोगुड इत्यादिषु प्रत्यक्षसामान्यल-क्षणंचित्वं प्रमाणचैतन्यस्याबाधितयोग्यवर्तमानविषयावच्छिन्नचैतन्या-भिन्नत्वं यथार्थप्रत्यक्षलक्षणम् ॥

उक्तं प्रत्यक्षं प्रकारांतरेण द्विविधं, इन्द्रियजन्यं तद जन्यंचेति । तत्रेन्द्रियाजन्यं सुखादिप्रत्यक्षं, मनस इन्द्रियत्वनिराकरणात् । इन्द्रियाणि पंच घ्राणरसना चक्षुःश्रोत्रत्वगात्मकानि । सर्वाणिचेन्द्रियाणि स्वस्व विषयसंयुक्तान्येवप्रत्यक्षज्ञानं जनयंति । तत्रघ्राणर सनत्वगिन्द्रियाणि स्वस्थानस्थितान्येव गंधरसस्प र्शोपलंभान् जनयंति । चक्षुःश्रोत्रेतु स्वत एव विष यदेशं गत्वा स्वस्वविषयं गृह्णीतः । श्रोत्रस्यापि चक्षु रादिवत् परिच्छिन्नतया भेर्यादिदेशगमनसंभवात् । अत एवानुभवो भेरीशब्दो मया श्रुत इति वीचीतरं

गादिन्यायेन कर्णशष्कुलीप्रदेशेऽनंतशब्दोत्पत्तिकल्पनागौरवम्। भेरीशब्दो मया श्रुत इति प्रत्यक्षस्य भ्रमत्वकल्पनागौरवं च स्यात् । तदेवं व्याख्यातं प्रत्यक्षम् ॥

## ॥ इतिप्रत्यक्षं प्रमाणम् ॥

उक्तप्रत्यक्षं पुनर्विभजते ( उक्तमिति ) यथाचेन्द्रियजन्यमित्यत्रेन्द्रियशब्देन ज्ञानेन्द्रियाणि पंच गृह्यंते नतु नैयायिकवत् षड्नापिदशकर्मेन्द्रियाणां ज्ञानाजनकत्वादित्याशयेनाह । ( इन्द्रियाणिपंचेति ) तान्यपिकानीत्यपेक्षायामाह । ( घ्राणेति ) तत्सद्भावेच रूपादिज्ञानानि सकरणकानि क्रियात्वाच्छिदिक्रियावदूइत्यनुमानंप्राणम् अनूक्रामंतं सर्वे प्राणा अनूक्रामंतीत्याद्याश्रुतिश्च मानं इन्द्रियाण्यप्राप्यकारिणीतिसौगतास्तान्निराकर्तुमाह (सर्वाणिचेति) तत्रापि फलवलकल्प्यस्वभावविशेषमाश्रित्याह(तत्रेति)ननु चक्षुषस्तत्संभवेपि कर्णशष्कुल्यवच्छिन्ननभोरूपश्रोत्रस्य विषयदेशगमनं न संभवति इत्याशंक्याह ( श्रोत्रस्यापीति ) आकाशादुत्पन्नं श्रोत्रमपिचक्षुरादिवत्परिच्छिन्नमितिभावः।यतः श्रोत्रस्य शब्ददेशगमनमत एवनैयायिकप्रक्रियातुगौरवग्रस्तत्वादुपेक्ष्येत्याह (वीचीति) यथा वीचेस्तरंगस्ततोपिवीच्यंतरं ततोपि तरंगांतरमिति न्यायवत् भेरीदण्डसंयोगान्नभस्युत्पन्नाच्छब्दादसमवायिकारणाच्छब्दांतरस्योत्पत्तिस्ततोन्यस्येति परंपरयांऽत्यशब्दस्य श्रोत्रसंबंधकल्पनागौरवं कदंबमुकुलन्याय आदिपदाज्ज्ञेयः प्रदेशोसंबंधार्थं परमप्रकृतमुपसंहरति ( तदेवमिति ) ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिसुताशिवदत्तविरचितायांवेदान्तपरिभाषार्थदीपिकायांप्रत्यक्षपरिच्छेदःसमाप्तः ॥ १ ॥

---

१ अवतंसं नाम भूषणम् ।

# अथानुमानपरिच्छेदः २.

## अथानुमानं निरूप्यते ॥

एवं सर्ववादिसंमतंज्येष्ठं प्रत्यक्षप्रमाणं प्रथमं निरूप्यबहुवादिसम्मतत्वात्तदनंतरं अनुमाननिरूपणं प्रतिजानीते ( अथेति ) ॥ १ ॥

**अनुमितिकरणमनुमानम् । अनुमितिश्च व्याप्तिज्ञानत्वेन व्याप्तिज्ञानजन्याऽव्याप्तिज्ञानानुव्यवसायादेस्तत्त्वेन तज्जन्यत्वाभावान्नानुमितित्वम्, अनुमितिकरणं च व्याप्तिज्ञानं तत्संस्कारोऽवांतरव्यापारः नतु तृतीयलिंगपरामर्शोऽनुमितौकरणं तस्यानुमितिहेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वात् ॥**

अनुमीयतेअनेनेत्यनुमानं अनुमितिकरणमिति व्युत्पन्नमनुमानपदं लक्षणमव्युत्पन्नं लक्ष्यमित्याशयेनानुमानं लक्षयति ( अनुमितीति ) अनुमानलक्षणघटकानुमितेर्लक्षणमाह ( अनुमितिश्चेति ) व्याप्तिज्ञानत्वेन नतुविषयत्वादिना व्याप्तिश्चवक्ष्यमाणा तज्ज्ञानंच व्यभिचारज्ञानविरोधिज्ञानमितिपर्य्यवस्यति । नन्वत्र व्याप्तिपदं व्यभिचारज्ञानविरोधिपरं नतुग्रंथकृदभिमतव्याप्तिपरं तेन तज्जैनकेत्यंताभावगर्भसाध्याभाववदवृत्तित्वादिरूपव्याप्तिज्ञानेऽन्योन्याभावगर्भसाध्यवत्प्रतियोगिकान्योन्याभावासामानाधिकरण्यादिरूपव्याप्तिज्ञानेच कारणतावच्छेदकत्वादनुमितिर्भवति इदानीं तुनस्यादितिचेन्न अत्यंताभावादिगर्भव्याप्तिज्ञानस्यापि व्यभिचारज्ञानविरोधिज्ञान एव पर्यवसानात् वस्तुतो व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वस्य वक्ष्यमाणत्वाच्च तादृशावच्छेदकविवक्षायाः फलमावेदयति ( व्याप्तिज्ञानेति ) तत्त्वेन व्याप्तिज्ञानत्वेन आदिपदंतज्ज-

---

१ अनुमिति । २ व्याप्तिज्ञानत्वरूपस्यावच्छेदकस्यसत्त्वात् ।

न्यस्मृतिशाब्दज्ञानादिसंग्रहार्थं अनुव्यवसायस्मृतिशाब्दज्ञानादिषुविषयत्वस्वसमानविषयानुभवत्वपदार्थज्ञानत्वादिनाहेतुत्वात्तत्वेनाहेतुत्त्वमित्यर्थः ननुव्याप्तिज्ञानस्यकिमनुमितिजनकत्वमात्रमुततत्करणत्वमित्यपेक्षायामाह ( अनुमितिकरणंचेति ) एतेन व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यं ज्ञानमनुमितिस्तत्करणमनुमानं, तच्चलिंगपरामर्श इति प्रत्युक्तम्। व्याप्तिज्ञानस्यैव तत्करणत्वसंभवे तदतिरिक्तपरामर्शांगीकारस्यानौचित्यात् नाप्यनुमितौ लिंगं करणमयोग्यलिंगकानुमितौ परामर्शस्य व्यापारत्वासंभवेन तत्करणत्वासंभवतया व्यभिचारात्। तस्मादनुमितिकरणत्वाद्व्याप्तिज्ञानमेवानुमानशब्दाभिधेयं नतु लिंगतत्परामर्शाविितिभावः। ननु व्याप्तिज्ञानस्य करणत्वेतद्व्यापारोवक्तव्यः व्यापारवदसाधारणकारणस्य करणत्वादित्यपेक्षायामाह ( तत्संस्कारइति ) व्याप्तिज्ञानसंस्कार इत्यर्थः। ननु महानसादौधूमादिज्ञानंप्रथमं पक्षे ततोद्वितीयं ततो व्याप्तिं स्मृत्वा पक्षे धूमादिपरामर्शात्मकं तृतीयं ततोवन्ह्याद्यनुमिति रिति तृतीयलिंगपरामर्शात्मकज्ञानमनुमितिकरणमिति वदंति नैयायिकाः, अतोभवद्भिरपि तथैव किमितिनाभ्युपगम्यते इत्याशंक्याह ( नतुतृतीयेति) व्याप्तिविशिष्टपक्षधर्म्मताज्ञानं परामर्शः प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यंताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवतितेनसमंतस्यसामानाधिकरण्यं व्याप्तिः। व्याप्यस्य पक्षवृत्तित्वं पक्षधर्म्मता। तथाच वह्निव्याप्यधूमवानयमित्यादिज्ञानमुक्तलक्षणपरामर्शात्मकं तत्तुनानुमितिकरणमित्यर्थः तत्रहेतुमाह। ( तस्यानुमितीति ) पक्षधर्म्मताज्ञानद्वारोद्बुद्धसंस्कारेव्याप्तिज्ञानस्यान्वयव्यतिरेकाभ्यामनुमितिजनकत्वाभ्युपगमस्यावश्यकतया तद्रहितस्य परामर्शस्य तद्धेतुत्वासिद्ध्या तत्करणत्वस्य दूरनिरस्तत्वमित्यर्थः। उपलक्षणमिदं, अनुमितिकरणं लिंगं, तत्परामर्शोऽवांतरव्यापार इति वैशेषिका मन्वते। तन्न, साधुविनष्ट

---

१ धूमः। २ प्रतियोगितावच्छेदकंघटत्वादिकंतदवच्छिन्नं घटादिकंतद्भिन्नवह्निरूपं साध्यम्। ३ वह्निना समम्। ४ धूमस्य। ५ अन्वयव्यतिरेकरहितस्य।

स्यानागतस्य च लिंगस्य तदानीमभावेन ततोनुमित्यानापत्तेरित्यपि द्रष्टव्यम् ॥

**नच संस्कारजन्यत्वेनानुमितेः स्मृतित्वापत्तिः स्मृतित्वप्रयोजकतया संस्कारध्वंससाधारणसंस्कारजन्यत्वस्य तदप्रयोजकत्वात्। नच यत्र व्याप्तिस्मरणादनुमितिस्तत्र कथंसंस्कारोहेतुरिति वाच्यम्।व्याप्तिस्मृतिस्थलेऽपि तत्संस्कारस्यैवानुमिति हेतुत्वात् । नहिस्मृतेः संस्कारनाशकत्वनियमः स्मृतिधारादर्शनात्। नचानुद्बुद्धसंस्कारादप्यनुमित्यापत्तिः तदुद्बोधस्यापि सहकारित्वात् ॥**

ननु संस्कारजन्यं ज्ञानं हि स्मृतिरितिस्मृतिलक्षणं तस्य चानुमितावप्यनुगमात्। तस्यापि स्मृतित्वापत्तिरित्याशंक्य परिहरति (नचेति) तत्र हेतुमाह ( स्मृतीति ) नन्वेवं तर्हि तत्तत्प्रागभावजन्यत्वरूपप्रयोजकस्य सर्वत्रसुलभात्। तत्र तत्र प्रयोजकांतराभ्युपगमोऽनर्थकः स्यादित्यरुचेः पक्षांतरमाह ( संस्कारमात्रेति ) ननु व्याप्तिस्मरणादनुमितिस्थले संस्कारजन्यत्वं व्यभिचरितं व्याप्तिस्मृत्यासंस्कारनाशादित्याशंक्य परिहरति ( नचेति ) व्याप्तिस्मृतिजन्यानुमितिस्थलेपि संस्कारनाशानभ्युपगमेन व्यभिचाराभावादित्याह ( व्याप्तिस्मृतीति ) स्मृतिधारादर्शनात्स्मृतेः संस्कारनाशकत्वानियमोनास्तीत्याह ( नहीति ) ननु संस्कारस्यैवानुमितिहेतुत्वेनुद्बोद्धादपि तस्मादनुमितिप्रसंग इत्याशंक्य परिहरति ( नचेति ) तदुद्बुधस्य पक्षधर्म्मताज्ञानजन्यस्य संस्कारोद्बोधस्य ॥

**एवंचायं धूमवानिति पक्षधर्मताज्ञानेन धूमोवह्निव्या**

---

१ अनुमित्यात्मकज्ञानस्यापि ।

प्यइत्यनुभवाहितसंस्कारोद्बोधे च सति वह्निमानित्य नुमितिर्भवति नतुमध्ये व्याप्तिस्मरणं तज्जन्यवह्नि व्याप्यधूमवानित्यादिविशेषणविशिष्टं ज्ञानं वा हेतु त्वेन कल्पनीयं गौरवात् मानाभावाच्च । तच्च व्याप्ति ज्ञानं वह्निविषयकज्ञानांश एव करणं, नतु पर्वतवि विषयकज्ञानांश इति पर्वतोवह्निमानिति ज्ञानस्य वह्न्यंश एवानुमितित्वं न पर्वताद्यंशे तदंशे प्रत्यक्ष त्वस्योपपादितत्वात् ॥

फलितमाह(एवंचेति)व्याप्तिज्ञास्यकरणत्वे व्याप्तिज्ञानसंस्कारस्यतद्व्यापा रत्वेपक्षधर्म्मताज्ञानजन्यसंस्कारोद्बोधस्य सहकारित्वेचसिद्धे सति पर्वतो-वह्निमानित्येकमेवज्ञानमनुमित्यात्मकमितियेऽभिमन्यंते तान्निराकर्तुमाह ( तच्चेति ) सन्निकृष्टपक्षकानुमितिस्थले ज्ञानद्वयस्योपपादितत्वादित्याह ( पर्वतइति ) पर्वतं पश्यामि वह्निमनुमिनोमीत्यनुभवबलातुज्ञानद्वयस्याव-श्यकतया जातित्वोपाधित्वपरिभाषायाश्चाऽप्रामाणिकत्वात् । ज्ञानस्यां-शभेदेन परोक्षत्वापरोक्षत्वयोरुपपादितत्वादित्यर्थः ॥

व्याप्तिश्चाशेषसाधनाश्रयाश्रितसाध्यसामानाधिकर ण्यरूपा । साच व्यभिचारादर्शने सति सहचारदर्श नेन गृह्यते तच्च सहचारदर्शनं भूयो दर्शनं सकृद्दर्श नंवेति विशेषो नादरणीयः । सहचारदर्शनस्यैव प्रयोजकत्वात् तच्चानुमानमन्वयिरूपमेकमेव । नतु केवलान्वयि सर्वस्यापि धर्मस्यास्मन्मते ब्रह्मनिष्ठा त्यंताभावप्रतियोगित्वेनात्यंताभावप्रतियोगिसाध्य कत्वरूपकेवलान्वयित्वस्यासिद्धेः ॥

नन्वनुमितिकरणव्याप्तिज्ञानेस्वीकृतेकाव्याप्तिरित्यपेक्षायांव्याप्तिस्वरूप माह(व्याप्तिश्चेति)अशेषं च तत्साधनं च तस्याश्रयस्तदाश्रितं यत्साध्यं तेन समं हेतोः सामानाधिकरण्यं रूपं यस्याः सा साधनतावच्छेदकावच्छिन्न साधनाश्रयाश्रितसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यरूपेति यावत्।एवं च यत्किंचिद्वह्न्यादिसाधनाश्रयाश्रितयत्किंचिद्धूमादिसाध्यसा मानाधिकरण्यमादायपर्वतोधूमवान् वह्नेरित्याद्यसद्धेतौ नातिप्रसंगः। नन्वेवं भूताव्याप्तिःकेन गृह्यते नतावत्तर्केण व्याप्यारोपेण व्यापकारोपरूपस्य तस्य व्याप्त्यधीनत्वात्।नापि सहचारदर्शनेन सकृद्दर्शनेभूयोदर्शनेच तस्मि- न्कचिद्व्यभिचारोपलंभादित्याशंक्याह (साचेति ) तच्चसकृद्दर्शनंभूयोदर्श- नंवाइत्यपेक्षायामाह (तच्चेति ) गृहीतसहचारस्य व्याप्तिग्रहदर्शनादगृही- तसहचारस्यव्याप्तिग्रहादर्शनाच्चेत्यन्वयव्यतिरेकाभ्यां सहचारदर्शनस्य हेतुत्वसिद्ध्यालाघवात् तस्यैवप्रयोजकत्वं नतुतद्विशेषस्येत्याह ( सहचा- रेति ) एवं व्याप्तिज्ञानस्यानुमितिकरणत्वेनानुमानत्वं प्रसाध्येदानीमनु- मानत्रैविध्यमपि नैयायिकादिवदस्मन्मते नास्तीत्याशयेनाह ( तच्चानु- मानमिति ) ननुकेवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिभेदात्त्रिविध- मित्यर्थः, अन्वयिरूपम् । अन्वयमुखव्याप्तिज्ञानरूपं ननु परोक्तभे- दानां जागरूकत्वे कथमनुमानस्यैकरूपत्वमित्याशंक्याद्यभेदं निराचष्टे । ( नत्विति ) तदत्यंताभावाप्रतियोगिसाध्यकम् । नचास्मन्मते ब्रह्माति- रिक्तं किंचिदप्यत्यंताभावाप्रतियोगी नेहनानास्तिकिंचनेत्यादिश्रुत्या सर्वस्यापि ब्रह्मनिष्ठात्यंताभावप्रतियोगित्वावधारणादिति तथाभूतकेव- लान्वयित्वस्यासिद्धेरित्याह ( सर्वस्यापीति ) ॥

## नाप्यनुमानस्य व्यतिरेकिरूपत्वं साध्याभावे साधना भावनिरूपितव्याप्तिज्ञानस्य साधनेन साध्यानुमिता वनुपयोगात् । कथं तर्हि धूमादावन्वयव्याप्तिमविदु

---

१ केवलान्वयि ।

षोपि व्यतिरेकव्याप्तिज्ञानादनुमितिः अर्थापत्तिप्रमाणादिति वक्ष्यामः अत एवानुमानस्य नान्वयव्यतिरेकिरूपत्वंव्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वात् ॥

एवं प्रथमभेदं निराकृत्यकेवलव्यतिरेकिरूपं द्वितीयभेदं निराचष्टे । ( नाप्यनुमानस्येति ) व्यतिरेकिरूपत्वं केवलव्यतिरेकिरूपत्वं साधनेनहिसाध्यमनुमीयते । तत्रच साध्यसाधनयोर्व्याप्तिज्ञानमुपयुज्यते नतुसाध्याभावसाधनाभावयोरित्याह ( साध्याभावे इति ) तथाच पृथिवीइतरेभ्योभिद्यते गंधवत्त्वात् । यदितरेभ्योनभिद्यते न तद्गंधवद्यथाजलादीत्याद्युदाहरणानि त्वर्थापत्तेर्गंधवत्त्वस्येतरभेदोपपादकत्वादितिभावः।नन्वन्वयव्याप्तिज्ञानरहितस्यव्यतिरेकव्याप्तिज्ञानादनुमितिर्भवति भवन्मते सा कथमुपपद्यते इति शंकते ( कथंतर्हीति ) तस्यार्थापत्तिप्रमाणाद्धव्याद्विज्ञानंनत्वनुमानादतोनोक्तदोष इत्याह ( अर्थापत्तीति ) वक्ष्यमाणरीत्या अर्थापत्तिप्रमाणस्यावश्यकतया व्यतिरेक्यनुमानस्य तदंतर्भावसंभवे तत्पृथक्त्वस्याभ्युपगमो न युक्त इतिभावः । तृतीयभेदं निराकरोति (अतएवेति) यतो व्यतिरेकव्याप्तिज्ञानस्य नानुमितिजनकत्वमतएवेत्यर्थः। अन्वयव्यतिरेकिरूपेत्वन्वयव्याप्तिज्ञानस्यैवानुमितिजनकत्वे व्यतिरेकव्याप्तिज्ञानस्य तज्जनकत्वाभ्युपगमस्य वैयर्थ्यादित्याह ( व्यतिरेकेति ) अत्रकेचित्—स्ववृत्तिविरोधिवृत्तिमदत्यंताभावाप्रतियोगित्वम् । साध्यस्य केवलान्वयित्वं तत्साध्यकत्वकेवलान्वयिलिंगलक्षणं प्रमेयत्वादेश्च स्वसमानाधिकरणपारमार्थिकत्वावच्छिन्नात्यंताभावप्रतियोगित्वेपिस्ववृत्तिविरोधिवृत्तिमदत्यंताभावाप्रतियोगित्वात्केवलान्वयित्वम्।नच श्रुतिविरोधःशंक्यः,तस्या अपि पारमार्थिकत्वावच्छिन्नद्वैताभावपरत्वात् । तदुक्तं विवरणे आगमेन चद्वैतस्य तत्त्वांशबाधादिति ॥ नच लक्षणे स्ववृत्ति विरोधीति व्यर्थंतस्याव्याप्यवृत्तिकपिसंयोगात्यंताभावादिसंग्रहार्थत्वात् ।

---

१ घट। २ स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वम् ।

नच ब्रह्मणः स्वप्रकाशत्वेन तत्र स्वरूपेणापिप्रमेयत्वाभावात्कथंकेवलान्वयित्वमितिवाच्यम्, ब्रह्मणोपि वृत्तिलक्षणप्रमाविषयत्वात्। नचैतावता स्वप्रकाशत्वविरोधः, अनुपहितस्यैव तथात्वात्।नचैवमपि नाभिधेयत्वंकेवलान्वयि ब्रह्मणोनभिधेयत्वादिति वाच्यम्। ब्रह्मणोलक्ष्यतयावाच्यत्वाभावेपि पदजन्यज्ञानविषयत्वाद्वाच्यत्वस्यापि ग्रंथकृतावक्ष्यमाणत्वाच्च। नचैवं प्रमेयत्वादिविरोधिवृत्तिमदत्यंताभावस्याप्रसिद्धत्वात्तत्र लक्षणाव्याप्तिः स्ववृत्तिविरोधिवृत्तिमदत्यंताभावप्रतियोगिनोघटादयः प्रसिद्धास्तदन्यत्वस्यप्रमेयत्वादावपिसत्त्वात्। एवंधूमादावन्वयव्याप्तिमविदुषोपि व्यतिरेकव्याप्तिज्ञानाद्वह्निज्ञानमित्याविवादम्। तच्चानुमितिरेववह्निमनुमिनोमीत्यनुव्यवसायात्। नच क्लृप्तकारणव्याप्तिज्ञानस्याभावात् कथमनुमितिरित्युक्तमितिवाच्यम्, व्यतिरेकव्याप्तिज्ञानस्य सत्त्वात्। नचैतदनुमित्यकरणमिति वाच्यम्, स्वव्यभिचारधीविरोधिधीविषयव्याप्तिज्ञानत्वेन व्याप्तिज्ञानस्यानुमितिहेतुत्वात्। अस्य च व्यतिरेकव्याप्तिज्ञानसाधारणत्वात्। नन्वनुमानस्य व्यतिरेकितयापि प्रामाण्याभ्युपगमे तत्रैवार्थापत्तेरंतरभावापत्तौ सा पृथक्प्रमाणमितिराद्धांतो भज्येतेतिचेत्तर्ह्यनुमानस्य प्रामाण्येसंशयाद्युत्तरप्रत्यक्षस्थले चक्षुरादेः प्रामाण्यं नस्यात्तत्रानुमितिसामग्रीसत्त्वेनानुमितिरेवोत्पत्तेः। तथाशाब्दस्थलेपि शब्दो न प्रमाणंस्यात् एते पदार्थास्तात्पर्य्यविषयपरस्परसंसर्गवंतः आकांक्षादिमत्पदकदम्बस्मारितत्वादित्यनुमानेनैव क्लृप्तप्रमाणभावेन तात्पर्यविषयसंसर्गप्रतीतेः संभवात्। यदिस्थाणुं साक्षात्कारोपिशब्दादमुमर्थंजानामीत्यनुव्यवसायात्प्रत्यक्षशब्दयोः पृथक् प्रामाण्यं तदाव्यतिरेकव्याप्तिज्ञानादिघटिकायामनुमितिसामग्र्यां सत्यामपि वह्निज्ञानानंतरं धूमेन वह्निं कल्पयामीति पदानुव्यवसायः,तदाधूमस्यार्थापत्तिविधयाप्रामाण्यमिति तुल्यम्।यद्वा निरुपाधिव्यतिरेकसहचारेणान्वय व्याप्तिरेवगृह्यते इति व्यतिरेकिण्यप्यन्वयव्याप्तिज्ञानमेवानुमितिहेतुः,नचैवं सत्यन्वयिव्यतिरेकिणोर्भेदो न स्यादिति वाच्यम्। व्यतिरेकसहचारमात्र-

१ इतराप्रकाश्यत्वे सति प्रकाशवत्वं स्वप्रकाशत्वन्तेन स्वप्रकाशत्वेन।

ज्ञानजन्यान्वयव्याप्तिधीर्यत्रानुमितिहेतुः स व्यतिरेकी, यत्रान्वयसहचारमात्रज्ञानजन्यान्वयव्याप्तिधीरनुमितिहेतुः सोन्वयी, यत्रोभयसहचारज्ञान जन्यान्वयव्याप्तिधीरनुमितिहेतुः सोन्वयव्यतिरेकीतिविभागोपपत्तेः ॥ अस्मिंश्च पक्षे पदान्वयसहचारेणैवान्वय[1]व्याप्तिस्फुरणं तदाधूमस्यकेवलान्वयितया गमकत्वम् । यदा व्यतिरेकसहचारेणैवान्वय[2]व्याप्तिस्फुरणं तदाकेवलव्यतिरेकितया यदान्वय[3]व्यतिरेकसहचारेणान्वयव्याप्तिस्फुरणं तदान्वयव्यतिरेकितया यदाव्यतिरेकसहचारेणव्यतिरेकव्याप्तेरेवज्ञानं तदार्थापत्तिविधया धूमस्यप्रामाण्यं नच व्यतिरेक्यनुमानस्य पृथक्प्रमाणत्वेऽपसिद्धान्तः मूलग्रंथेषु शुक्तिरूप्यमिथ्यात्वादौ तत्र तत्र व्यतिरेक्यनुमानस्यापि प्रमाणत्वेनोपन्यासात्तस्मात्रिविधमेवानुमानमिति युक्तमिति वदंति 'तत्रेदंवक्तव्यं' नतावदौपनिदमतेऽनुमानस्य केवलान्वयित्वं संभवति सर्वस्यापि प्रपंचस्य ब्रह्मनिष्ठात्यंताभावप्रतियोगित्वाभिधानात् । ब्रह्मणि प्रपंचात्यन्ताभावो व्यावहारिक इतिपक्षे स्ववृत्तिविरोधिवृत्तिमदत्यंताभावप्रतियोगित्वं प्रमेयत्वादेरायाति नतुतदप्रतियोगित्वम्।नन्वेवं तर्हिनिषेधस्य वाध्यत्वेन पारमार्थिकसत्त्वाविरोधित्वादर्थांतरमितिचेत्, न, स्वप्नार्थस्य स्वाप्ननिषेधेन वाध्येनापिवाधदर्शनात् । नच निषेधस्य वाध्यत्वंपारमार्थिकसत्त्वाविरोधित्वे तंत्रं, किंतुनिषेध्यापेक्षया न्यूनसत्ताकत्वं प्रकृतेच्च तुल्यसत्ताकत्वाद्विरोधित्वमाविरुद्धम् । तत्र हिनिषेधस्य निषेधप्रतियोगिसत्त्वमायाति यत्र निषेधस्य निषेधबुद्ध्या प्रतियोगिसत्त्वं व्यवस्थाप्यते निषेधमात्रं तुनिषिध्यते यथारजते नेदंरजतमिति प्रतीत्यनंतरमिदं नारजतमिति ज्ञाने नरजतंव्यवस्थाप्यते तन्निषेधमात्रंतुनिषिध्यते यत्रतुप्रतियोगिनिषेधयोरुभयोरपिनिषेधस्तत्रनप्रतियोगिसत्त्वम्।यथाध्वंससमयेप्रागभावप्रतियोगिनोरुभयोर्निषेधः तथा

---

१ यत्रधूमस्तत्राग्निरित्यन्वयसहचारेणवह्निव्याप्योधूमइत्यन्वयव्याप्तिस्फुरणमित्यर्थः । २ यत्रवह्नि र्नास्तितत्रधूमोपि नास्तीति व्यतिरेकसहचारेणवह्निव्याप्योधूमइत्यन्वयव्याप्तिस्फुरण मित्यर्थः । ३ निरुक्तोभयसहचारेणनिरुक्तान्वयाव्याप्तिस्फुरणंयदा तदान्वयव्यतिरेकी तिभावः ।

च प्रकृतेपिनिषेधस्यबाध्यत्वेपिप्रंपचस्यनतात्विकत्वंनिषेधबाधकेनप्रतियोगिनः प्रपंचस्यतन्निषेधस्य चबाधनात्। उभयोरपिनिषेध्यतावच्छेदकस्यदृश्यत्वादेस्तुल्यत्वात् । नचातात्विकनिषेधबोधकत्वाच्छ्रुतेरप्रामाण्यंशंक्यं ब्रह्मभिन्नस्यातात्त्विकत्वंबोधयतः शास्त्रस्याप्रामाण्यायोगात्। एतन्निषेधप्रतियोगित्वंचस्वरूपेणैवनतुसद्विलक्षणस्वरूपानुपमर्दितपारमार्थिकत्वाकारेण स्वरूपेणत्रैकालिकनिषेधप्रतियोगित्वस्य प्रपंचे शुक्तिरजतादौचाभ्युपगमात्। रजतभ्रमानंतरमधिष्ठानसाक्षात्कारे रजतस्य रजतं नास्ति नासीत् नभविष्यतीति स्वरूपेणैव 'नेहनानेति' श्रुत्याच प्रपंचस्य स्वरूपेणैवनिषेधप्रतीतेः । नच तत्रलौकिकपारमार्थिकरजतमेवस्वरूपेण निषेधप्रतियोगीतिवाच्यम्। भ्रमबाधयोर्वैयधिकरण्यापत्तेः अप्रसक्तप्रतिषेधापत्तेश्च। नचैवं विवरणाचार्य्यवाक्यविरोध इतिवाच्यम्। तस्य पक्षांतरपरत्वात् ॥ अन्यथाबाध्यत्वरूपपारमार्थिकत्वस्य बाध्यत्व रूपमिथ्यात्वनिरूप्यत्वेनान्योन्याश्रयापातात् । किञ्च नात्ररजतमितिप्रतीतौ यथारजतस्य स्वरूपेण पारमार्थिकत्वेन च निषेधोविषयस्तथानेह नानास्तिकिंचनेत्यत्रापि प्रपंचस्वरूपेण पारमार्थिकत्वेन च निषेधो विषयः भिन्नविभक्त्यंतोपस्थापिते धर्मिणिप्रतियोगिनि च नञः संसर्गाभावबोधकत्वनियमस्य[1] व्युत्पत्तिसिद्धत्वात्। अस्तुवा पारमार्थिकत्वाकारेणैव निषेधस्तथापि प्रमेयत्वादेर्ब्रह्मरूपधर्मिन्यूनसत्ताकत्वे कथं केवलान्वयित्वं तत्त्वेच समसत्ताकत्वावश्यं भावात् कथंबाध्यत्वं तस्माद्ब्रह्मातिरिक्तं सर्वमिथ्येति वादिनः केषांचिद्धर्माणां केवलान्वयित्वकथनं केवलसाहसविजृंभितं[2] एतेन ब्रह्मणि[3] अभिधेयत्वस्थापनमपि निरस्तम् । यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्मत्वं विद्धिअविज्ञातं विजानतांप्रतिबोधा[4]विदितं मतमित्यादिश्रुत्याब्रह्मणि वाच्यत्वादेर्निषिद्धत्वात् । नचग्रंथकृता तत्रवाच्यत्वं वक्ष्यमाण-

---

१ व्युत्पत्तिश्चात्रानुभवः। २ अविचारविलसितमित्यर्थः। ३ अनुपदं वक्ष्यमाणहेतुना। ४ बोधशब्देन बाद्धाः प्रत्यया उच्यंते सर्वे प्रत्यया विषया भवंति ५ यस्य तत्तथा सर्वप्रत्ययदर्शीत्यर्थः।

मितिभ्रमितव्यम् । लक्षणां विनाशक्त्यापि महावाक्येनाखंडार्थो बोधयितुं शक्यते इत्येतत्परोत्तरग्रंथस्य ब्रह्मणि वाच्यत्वमस्तीत्येतत्कथनपरत्वाभावात् यदपि व्यतिरेक्यनुमानोपपादनं तदप्यसंगतम् । अर्थापत्तिवादिनां [२]तदावश्यकत्वेतद्वादिनामर्थापत्तेरावश्यकत्वापत्तेः यत्तु प्रत्यक्षशब्दयोर्यथापृथक् प्रामाण्यं तथार्थापत्तेरपीत्यादि, तदपि न, व्यतिरेकव्याप्तेरेवार्थापत्तिप्रमाणत्वेन [३]द्वयोः सामग्रीभेदाभावेन वैषम्यात् । तथाचव्यतिरेकव्याप्तिज्ञाने यत्र वह्न्यादिज्ञानं तत्रवह्निं कल्पयामि इत्याकारकानुव्यवसायोपलंभात् तत्करणमर्थापत्तिरेवनत्वनुमानं तस्यानुमित्यहेतुत्वात् । यत्तु व्यतिरेकसहचारमात्रज्ञानजन्यान्वयव्याप्तिधीर्यत्रानुमितिहेतुः सव्यतिरेकीत्यादि, तदपिन. अन्वयसहचारदर्शनस्यान्वयव्याप्तिज्ञानजनकताया व्यतिरेकसहचारदर्शनस्य व्यतिरेकव्याप्तिज्ञानजनकतायाः सर्वलोकानुभवसिद्धतया तद्विरुद्धकार्यकारणभाववर्णनानौचित्यात् । तथाचनास्त्यर्थापत्तिव्यत्तिरिक्तं व्यतिरेक्यनुमानं एतेन [४]तस्यान्वयव्यतिरेकिरूपत्वमपि प्रत्युक्तम् । तस्मादनुमानमन्वयिरूपमेवेति सुष्ठूक्तं मूलकृद्भिरन्यथापासिद्धांतापातः सांप्रदायिकग्रंथेषु केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेक्यनुमानानां क्वाप्यनुपन्यासात्क्वचित्प्रयोगस्तु परमतानुसारेण द्रष्टव्य इत्यास्तां तावत् ॥

**तच्चानुमानं स्वार्थपरार्थभेदेन द्विविधम् । तत्र स्वार्थं तूक्तमेव, परार्थंतु न्यायसाध्यम् । न्यायो नामावयवसमुदायः । अवयवाश्च त्रय एव प्रसिद्धाः प्रतिज्ञाहेतूदाहरणरूपाः, उदाहरणोपनयनिगमनरूपा वा, नतु पंचावयवरूपाः । अवयवत्रयेणैवव्याप्तिपक्षधर्म्मतयोरुपदर्शनसंभवेनाधिकावयवद्वयस्य व्यर्थत्वात् ।**

---

१ व्यतिरेकव्याप्तेः । २ व्यतिरेक्यनुमानवादिनाम् । ३ अर्थापत्तिव्यतिरेक्यनुमानयोः । ४ तस्यानुमानस्य ।

**एवमनुमाने निरूपिते तस्माद्ब्रह्मभिन्ननिखिलप्रपंचस्य मिथ्यात्वसिद्धिः ॥**

यथोक्तानुमानस्य द्वैविध्यमाह ( तच्चेति ) तत्र द्विविधे स्वार्थं स्वविवादगोचरार्थसाधकं उक्तमेव व्यभिचारादर्शने सति सहचारदर्शनेन गृह्यत इत्युक्तायानिरुक्तव्याप्तेर्ज्ञानमेवपरार्थं परविवादविषयार्थसाधकं न्यायसाध्यं न्यायप्रयोज्यं न्यायशब्दार्थमाह ( न्यायोनामेति ) वक्ष्यमाणावयवघटितवाक्यं अवयवसमुदायः तथाचानुमानप्रयोजकवाक्यार्थज्ञानजनकवाक्यत्वं न्यायत्वं तादृशन्यायजन्यज्ञानप्रयोज्यं व्याप्तिज्ञानं परार्थानुमानमित्यर्थः । अवयवाश्चकतीत्यपेक्षायामाह ( अवयवाश्चेति ) साध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षेप्रकृतसाध्यबोधजनकमहावाक्यैकदेशत्वम् । प्रतिज्ञावयवत्वम् । यथा पर्वतो वह्निमानित्यादि साध्यतावच्छेदकावच्छिन्नसाध्यान्वित[1]स्वार्थकतादृशैकदेशत्वं हेत्ववयवत्वं यथाधूमा[2]दित्यादि साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोक्तावयवत्वमुदाहरणावयवत्वं यथा योयो धूमवान् स सोऽग्निमान् यथामहानस इत्यादि प्रकृतोदाहरणोपदर्शितव्याप्तिविशिष्टपक्षबोधजनकन्यायैकदेशत्वमुपनयावयवत्वं यथावह्निव्याप्यधूमवांश्चायं तथाचायमितिवा व्याप्तिविशिष्टपक्षधर्महेतुज्ञाप्यसाध्यविशिष्टपक्षबोधकन्यायैकदेशत्वं तादृशसाध्यबोधकन्यायैकदेशत्वं वा निगमनावयवत्वं यथा तस्मादग्निमानित्यादि ननु प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपाः पंचावयवा इतिवदतां नैयायिकानां पक्षमनादृत्याध्वरमीमांसकानां पक्षाभ्युपगमेको हेतुरित्यत आह ( अवयवत्रयेणैवेति ) तथाच प्रथमपक्षे उपनयनिगमनकृत्यं हेतुप्रतिज्ञाभ्यांद्वितीयपक्षेहेतुप्रतिज्ञाकृत्यं ता[3]भ्यां कर्तुंशक्यमनुमित्युपयोगिज्ञानं चसर्वावयवकृत्यमितिभावः। निरूपितानुमानस्य प्रकृते उपयोगमाह ( एवमिति ) तस्मादनुमानात् ॥

---

१ हेतुवाक्यार्थकम् । २ पंचम्या ज्ञाप्यत्वंधूमज्ञानजन्यज्ञानविषयः । ३ उपनयनिगमनाभ्याम् ।

**तथाहि । ब्रह्मभिन्नं सर्वं मिथ्या ब्रह्मभिन्नत्वाद्यदेवं तदेवं यथा शुक्तिरूप्यम् । नच दृष्टांतासिद्धिः तस्य साधितत्वात् । नचाप्रयोजकत्वं शुक्तिरूप्यरज्जुसर्पादीनां मिथ्यात्वे ब्रह्मभिन्नत्वस्यैव लाघवेन प्रयोजकत्वात् ॥**

कीदृशं तदनुमानमित्यपेक्षायामाह ( तथाहीति ) पूर्वोक्तपक्षद्वयेप्रथमपक्षोऽस्मत्संमत इति द्योतयितुं प्रतिज्ञाद्यवयवत्रयात्मकं वाक्यमाह ( ब्रह्मेति ) शुक्तिरूप्यादौ सिद्धसाधनवारणाय सर्वमिति ब्रह्मणिबाधनिरासाय ब्रह्मभिन्नमिति रज्जुसर्पादौ साध्यसिद्धावपि न सिद्धसाधनं पक्षतावच्छेदकनानात्वाभावात्पक्षतावच्छेकनानात्वएवतदभ्युपगमादतएवानित्येवाङ्मनसे इत्यत्र अंशतस्सिद्धसाधनस्य परैरप्यङ्गीकृतत्वात्। नन्वसिद्धोयं दृष्टांतः तन्मिथ्यात्वे प्रमाणाभावात्, अनुमानांतरस्य तत्र प्रमाणत्वेऽनवस्थापातादित्याशंक्य परिहरति ( नचेति ) तस्य दृष्टांतस्यसाधितत्वात् प्रत्यक्षपरिच्छेदे साधितत्वात् नन्विदमनुमानमप्रयोजकं सत्यत्वेपि ब्रह्मभिन्नत्वोपपत्तेरित्याशंक्य परिहरति ( नचेति ) शुक्तिरजतादीनां मिथ्यात्वे नाविद्यातिरिक्तदोषजन्यत्वंप्रयोजकमपि तु ब्रह्मभिन्नत्वंलाघवात् तथाचलाघवरूपानुकूलतर्कसत्त्वान्नाप्रयोजकत्वमितिभावः ॥

**मिथ्यात्वं च स्वाश्रयत्वेनाभिमतयावन्निष्ठात्यंताभावप्रतियोगित्वं । अभिमतपदम् वस्तुतः स्वाश्रयाप्रसिद्धया असंभववारणाय यावत्पदमर्थांतरवारणाय ॥**

ननु शुक्तिरूप्यादौ किं लक्षणं मिथ्यात्वं प्रत्यक्षसिद्धं यदनुमानेन प्रपंचे साध्यत इत्यपेक्षायां मिथ्यात्वलक्षणमाह(मिथ्यात्वंचेति)स्वाश्रयत्वेनाभिमते यावति स्थितोऽत्यंताभावस्तत्प्रतियोगित्वम् । ननु स्वाश्रययावन्निष्ठात्यंताभावप्रतियोगित्वमित्येतावदेवास्त्वित्याशंक्याह ( अभिमतेति ) यावतिस्वाश्रयेस्वात्यंताभावासंभवस्तद्वारणाय तदावश्यकम् ।

तथाचवस्तुतोऽस्वाश्रयेपि शुक्त्यादौ स्वाश्रयत्वेनाभिमते वर्तमानोयोत्यं-ताभावस्तत्प्रतियोगित्वं शुक्तिरूप्यादेरस्तीतितत्सार्थक्यमितिभावः। ननु-एतावतैवनिर्वाहे यावत्पदंव्यर्थमित्यतआह ( यावदिति ) तथाचया-वत्पदाभावे कपिसंयोगाश्रयत्वेनाभिमते वृक्षे मूलावच्छेदेन वर्तमानोय-स्तदत्यंताभावस्तत्प्रतियोगित्वं शाखावच्छेदेनस्थितस्य कपिसंयोगस्या-स्तीति सामानाधिकरण्यरूपार्थांतरसिद्धिस्तद्वारणाय तदावश्यकम्। तद्दानेतु स्वाश्रयत्वेनाभिमते यावति शाखादौ तदत्यंताभावासत्त्वान्न-दोष इत्यर्थः।अस्मन्मते 'तस्माद्वाएतस्मादात्मन आकाशः संभूत' इत्यादि श्रुत्या आकाशादेरपि जन्यत्वावगमात्तस्यापि स्वकारणाश्रितत्वावश्यं-भावात् न तत्राव्याप्तिः ॥

**तदुक्तम्—सर्वेषामेवभावानां स्वाश्रयत्वेन सम्मते ।**
**प्रतियोगित्वमत्यंताभावं प्रति मृषात्मता ॥इति॥**

**यद्वा अयं पट एतत्तंतुनिष्ठात्यंताभावप्रतियोगी पटत्वात्, पटान्तरवदित्याद्यनुमानं मिथ्यात्वे प्रमाणम् ॥**

स्वोक्तलक्षणे चित्सुखाचार्य्यसम्मतिमाह ( तदुक्तमिति ) एवं प्राचीनोक्तमनुमानप्रयोगमुपपाद्यनवीनोक्तमनुमानप्रयोगमाह ( यद्वेति ) तादात्म्यसंबंधेनैकावच्छेदेनेत्यपिद्रष्टव्यम्। तथाचपूर्ववन्नार्थांतरताएवंव्य-धिकरणधर्म्मानवच्छिन्नप्रतियोगिताकत्वमत्यंताभावविशेषणं देयम्। तेन तमादायनार्थांतरं तथा एतद्दोषवारणायैतत्कालीनत्वमपि तद्विशेषणंदे-यम्। नचैतत्तंतुषु पटसमवाय इति प्रत्यक्षबाध इतिवाच्यम्।तस्य प्रत्यक्षस्य भ्रमप्रमासाधारणतया चंद्रप्रादेशिकत्वप्रत्ययवदप्रमाण्यशंकास्कंदितत्वेन बाधितत्वात् ॥

**तदुक्तम्—**

**अंशिनः स्वांशगात्यंताभावस्य प्रतियोगिनः ।**

आक्रम नवीन

अंशित्वादितरांशीवद्दिगेषैवगुणादिषु इति ॥

अत्रापि चित्सुखाचार्यसम्मतिमाह ( तदुक्तमिति ) दिगेषैव एषएव-मार्गः रूपंरूपिनिष्ठात्यंताभावप्रतियोगिगुणत्वात् स्पर्शवदित्येवंक्रिया-दिष्वप्यूहनीयम् ॥

नच घटादेर्मिथ्यात्वे सन्घट इति प्रत्यक्षेण बाधः अधिष्ठानब्रह्मसत्तायास्तत्र विषयतया घटादेः सत्य त्वासिद्धेः। नच नीरूपस्य ब्रह्मणः कथं चाक्षुषा दिज्ञानविषयतेति वाच्यम्। नीरूपस्यापि रूपादेः प्रत्यक्षविषयत्वात्। नच नीरूपस्य द्रव्यस्य चक्षु राद्ययोग्यत्वमितिनियमः। मन्मते ब्रह्मणोद्रव्यत्वा सिद्धेः गुणाश्रयत्वं समवायिकारणत्वं वा द्रव्यत्व मिति तेऽभिमतम्। नहि निर्गुणस्य ब्रह्मणो गुणाश्रय तानापि समवायिकारणता समवायासिद्धेः ॥

ननूक्तं मिथ्यात्वानुमानं सन्घट इत्यादिप्रत्यक्षबाधितमित्याशंक्य परिहरति ( नचेति ) ननु रूपादिहीनस्य ब्रह्मणश्चाक्षुषादिज्ञानविषयत्वम-नुपपन्नमित्याशंक्य निषेधयति ( नचनीरूपस्येति ) नीरूपस्य प्रत्यक्ष-विषयत्वं नास्तीति नियमस्य व्यभिचारमाह ( नीरूपस्यापीति ) विशेष-नियममाशंक्य परिहरति ( नचेति ) नियमशरीरस्योक्तरूपत्वेपिना-स्त्यस्माकं क्षतिरित्याह ( मन्मतेइति ) ननु कथं ब्रह्मणोद्रव्यत्वंनास्ती-तिचेत्तत्र तल्लक्षणद्वयाननुगमादित्याह ( गुणेति ) निर्गुणस्य साक्षीचेता केवलोनिर्गुणश्चेत्यादिश्रुत्या निर्गुणत्वेन बोधितस्य ॥

अस्तु वा द्रव्यत्वं ब्रह्मणस्तथापि नीरूपस्य काल स्यैव चाक्षुषादिज्ञानविषयत्वेपि न विरोधः। यद्वा त्रिविधं सत्त्वं, पारमार्थिकं व्यावहारिकं प्रातिभासिकं

च। पारमार्थिकं सत्त्वं ब्रह्मणः, व्यावहारिकं सत्त्वमा काशादेः, प्रातिभासिकं सत्त्वं शुक्तिरजतादेः। तथाच घटः सन्निति प्रत्यक्षस्य व्यावहारिकसत्त्वविषयत्वेन प्रामाण्यम्। अस्मिन्पक्षेच घटादेर्ब्रह्मणि निषेधो न स्वरूपेण किन्तु पारमार्थिकत्त्वेनैवेति न विरोधः। अस्मिन्पक्षेच मिथ्यात्वलक्षणे पारमार्थिकत्वावच्छिन्नप्रतियोगिताकत्वमत्यंताभाव इति विशेषणं द्रष्टव्यम्। तस्मादुपपन्नं मिथ्यात्वानुमानमिति॥

॥ इत्यनुमानपरिच्छेदः समाप्तः॥ २॥

अस्तु यथाकथंचित् ब्रह्मणोपि द्रव्यता तथापि नदोष इत्यभ्युपेत्याप्याह ( अस्तुवेति ) अस्मिन्काले घटो नास्तीति प्रतीतिवलात्कालस्येन्द्रियवेद्यत्वम्। यथास्वीकृतमध्वरमीमांसकैस्तथातदनन्यथासिद्धप्रतीतिबलात् ब्रह्मणश्चाक्षुषत्वमस्माभिरप्यंगीक्रियते। तथाच ब्रह्मव्यतिरिक्तचाक्षुषतायामेव महत्त्वे सत्युद्भूतरूपवत्त्वं प्रयोजकमितिभावः। नन्वेवं तर्ह्याकाशे बलाकेति प्रतीतिबलादाकाशस्यापि चाक्षुषता स्यादित्यरुचेराह ( यद्वेति ) पारमार्थिकत्वव्यावहारिकत्वप्रातिभासिकत्वभेदात्त्रिविधं विषयभेदादविरोध इत्याह ( तथाचेति ) सत्त्वत्रैविध्येसतीत्यर्थः। ननु अस्मिन्पक्षे निषेधप्रतियोगिनोः सामानाधिकरण्यं सिद्ध्यति नतु घटादिमिथ्यात्वमित्याशंक्याह (अस्मिन्निति) स्वरूपेण व्यावहारिकत्वेन रूपेण तथाचैतत्पक्षेमिथ्यात्वलक्षणे इदंविशेषणं देयमित्याह ( अस्मिन्निति ) मिथ्यात्वानुमानोपपादनमुपसंहरति ( तस्मादिति )॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तविरचितायांपरिभाषार्थदीपिकायामनुमानपरिच्छेदःसमाप्तः॥ २॥

# अथोपमानपरिच्छेदः ३.

## अथोपमानं निरूप्यते ॥

अथ क्रमप्राप्तमुपमाननिरूपणं प्रतिजानीते ( अथेति ) अनुमाननिरूपणानंतरमित्यर्थः ॥

## तत्र सादृश्यप्रमाकरणमुपमानम् ॥

( तत्रेति ) अनुमाननिरूपणानंतरनिरूपणविषयीभूतोपमाने सतीत्यर्थः। अत्राप्युपमीयतेऽनेनेत्युपमानमितिव्युत्पन्न उपमानशब्दो लक्षणं अव्युत्पन्नस्तुलक्ष्यमित्याशयेनाह ( सादृश्येति ) सादृश्यप्रमाया उपमितिप्रमायाः करणमसाधारणकारणमुपमानमित्यर्थः ॥

**तथाहि नगरेषु दृष्टगोपिण्डस्य पुरुषस्य वनंगतस्य गवयेन्द्रियसन्निकर्षे सति भवति प्रतीतिरयं पिंडो गोसदृश इति। तदनंतरं भवतिनिश्चयः, अनेन सदृशीमदीया गौरिति। तत्रान्वयव्यतिरेकाभ्यां गवयनिष्ठगोसादृश्यज्ञानं करणं, गोनिष्ठगवयसादृश्यज्ञानं फलम् ॥**

ननूपमानस्य प्रत्यक्षाद्यंतर्भावान्नपृथक्प्रमाणतेति सांख्यादिभिरुक्तत्वात्कथमुपमानस्य सादृश्यज्ञानकरणतेत्याशंक्याह ( तथाहीति ) यथोपमानस्य सादृश्यप्रमाकरणत्वं तथाप्रदर्श्यते इत्यर्थः। गोसदृशः गोभिन्नत्वेसति गोगतभूयोधर्मवान्। तत्रानिश्चयद्वयमध्येयंपिंडोगोसदृश इति गोनिरूपितगवयपिंडनिष्ठसादृश्यज्ञानं करणं अनेन सदृशीमदीयागौरिति गवयपिंडनिरूपितगोनिष्ठसादृश्यज्ञानंफलं प्रथमज्ञाने जाते सति द्वितीयज्ञानस्योपदर्शनात्तद्विनातदभावादित्यन्वयव्यतिरेकाभ्यां प्रथमज्ञानस्योपमानत्वं द्वितीयज्ञानस्योपमितित्वमित्यर्थः ॥

**नचेदं प्रत्यक्षेण संभवति, गोपिंडस्य तदेन्द्रियासन्निकर्षात् । नाप्यनुमानेन गवयनिष्ठगोसादृश्यस्यातल्लिंगत्वात् ॥**

नचास्यप्रत्यक्षेणगतार्थतेत्याह (नचेति) इदं—गवयप्रतियोगिकगोनिष्ठसादृश्यज्ञानं तदा—गवयपिण्डेनेन्द्रियसन्निकर्षसमये तथाचेंद्रियासन्निकृष्टगोपिंडनिष्ठसादृश्यज्ञानं नप्रत्यक्षप्रमाणफलमित्यर्थः । एतेन यत्तु गवयस्य चक्षुःसन्निकृष्टस्यगोसादृश्यज्ञानं तत्प्रत्यक्षमेवात एव स्मर्य्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षं नह्यन्यद्गविसादृश्यमन्यच्च गवये भूयोवयवसामान्ययोगोजात्यंतरवर्तीजात्यंतरसादृश्यमुच्यते । सामान्ययोगश्चैकः सचेद्गवये प्रत्यक्षो गव्यपितथेति नोपमानस्य प्रमाणांतरत्वमस्तीति प्रत्युक्तम् । प्रोक्तविधया सादृश्यैकत्वेपि प्रतियोगिधर्मिभेदेन भेदाभ्युपगमादिन्द्रियसन्निकृष्टगवयनिष्ठसादृश्यज्ञानस्य प्रत्यक्षत्वेपि तदसन्निकृष्टगोनिष्ठस्य तस्य प्रत्यक्षत्वासंभवात् । नाप्यनुमानेनास्य गतार्थतेत्याह ( नापीति ) नहि मदीयागौरेतन्निरूपितसादृश्यवती गोनिरूपितसादृश्यवत्वादस्येत्यनुमातुं शक्यं गोनिरूपितगवयनिष्ठसादृश्यस्य गव्यवर्तमानत्वेन पक्षावृत्तितयातल्लिंगत्वाभावादित्याह ( गवयनिष्ठेति ) ॥

**नापि मदीयागौरेतद्गवयसदृशी, एतन्निष्ठसादृश्यप्रतियोगित्वात् । यो यद्गतसादृश्यप्रतियोगी, स तत्सदृशः । यथा मैत्रनिष्ठसादृश्यप्रतियोगी चैत्रः मैत्रसदृश इत्यनुमानात्तत्संभव इति वाच्यम् ॥**

अनुमानांतरेण तत्संभवमाशंक्य परिहरति ( नापीति ) तत्संभवः गवयनिरूपितगोनिष्ठसादृश्यप्रमासंभवः ॥

**एवंविधानुमानानवतारेप्यनेन सदृशी मदीया**

गौरिति प्रतीतेरनुभवसिद्धत्वात्। उपमिनोमीत्यनुव्यवसायाच्च। तस्मादुपमानं मानांतरम्।

॥ इत्युपमानपरिच्छेदः ॥ ३ ॥

अस्त्वेवं यथाकथंचिदनुमानोत्थानं तथापिगोनिष्ठं सादृश्यं नानुमानप्रमेयं तथाभूतानुमानानुत्थानेपि निरुक्तज्ञानस्य सर्वानुभवसिद्धत्वादनुमानस्यान्वयव्यतिरेकाभ्यां तत्करणतासिद्धेः। अन्यथा यत्रयत्रानुमानावतरणसंभवस्तस्यतस्यानुमानप्रमेयत्वे प्रत्यक्षसिद्धस्य घटादेरपि तत्प्रमेयतयातात्सिषाधयिषया सर्वत्रायं घटः कंबुग्रीवादिमत्त्वात् घटांतरवदित्येवमादिनानुमानसंभवात्प्रत्यक्षप्रमाणस्याप्यनुमानेंतर्भावः स्यादित्याशयेनाह ( एवंविधेति ) अनुव्यवसायादपिसादृश्यज्ञानमुपमानफलमित्याह ( उपमिनोमीत्यनुव्यवसायाच्चेति ) एतेन[1] योप्ययं गोसदृशस्य गवयशब्दोवाचक इति प्रत्ययः सोप्यनुमानमेव। योहि शब्दो यत्रवृद्धैः प्रयुज्यते सोऽसतिवृत्त्यंतरेतस्यवाचकोयथागोशब्दोगोत्वस्य प्रयुज्यते चैषगवयशब्दोगोसदृशइतितस्यैववाचकइतिप्रत्युक्तम्। अत एव न तज्ज्ञानमागमस्यापि फलं गवयसदृशीमदीया गौरिति वाक्यमश्रुतवतोपि तथाभूतज्ञानोत्पत्तिदर्शनात्तस्मादुपमानं न प्रत्यक्षाद्यन्तरगतमित्युपसंहरति ( तस्मादिति ) ॥

इतिश्रीपरमहंसपरिव्राजकाचार्य्यबालगोपालतीर्थश्रीपादशिष्यदत्तावतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तकृतायांवेदांतपरिभाषार्थदीपिकायामुपमानपरिच्छेदः समाप्तः ॥ ३ ॥

---

१ उक्तानुव्यवसायेन।

# अथागमपरिच्छेदः ४.



**अथागमो निरूप्यते ॥**

क्रमप्राप्तमागमनिरूपणं प्रतिजानीते ( अथेति ) उपमाननिरूपणानंतरं शब्दो निरूप्यत इत्यर्थः ॥

**यस्य वाक्यस्य तात्पर्यविषयीभूतसंसर्गो मानांतरेण न बाध्यते तद्वाक्यं प्रमाणम्, वाक्यजन्यज्ञानेच आकांक्षा योग्यताऽऽसत्तयस्तात्पर्यज्ञानं चेति चत्वारि कारणानि । तत्र पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकांक्षा ॥**

तत्रागमप्रमाणं लक्षयति ( यस्येति ) मानांतराबाधिततात्पर्यगोचरीभूतपदार्थसंसर्गबोधकवाक्यं शब्दप्रमाणमित्यर्थः ॥ शब्दसमानार्थके प्रमाणांतरेतिव्याप्तिवारणायोक्तम् । वाक्यस्येति वह्निनासिंचेदितिवाक्यस्य प्रमाणता निरासायोक्तम् । मानांतरेण नबाध्यते इति सप्रजापतिरात्मनो वपामुदखिददित्यादावव्याप्तिवारणाय तात्पर्यविषयीभूतेत्युक्तम्।मानांतरेणेत्यस्यसजातीय प्रमाणांतरेणेत्यर्थः।साजात्यंच व्यावहारिकतत्त्वावेदकत्वेन बोध्यम्।तेन पारमार्थिकतत्त्वावेदकैः“नेहनानास्ति किंचन” इति वेदांतैः घटानयनादिसंसर्गस्य यागस्वर्गादिसाध्यसाधनभावस्य च बाधेपि [1]नक्षतिः ॥ [2]एतेनानुमानात्पृथक्शब्दमनंगीकुर्वतो वैशेषिकाः पराकृतावेदितव्याः।ते हि लौकिकानि गामानयेत्यादीनिवैदिकानि“ज्योतिष्टोमेन स्वर्गकामोयजेत” इत्यादीनि तात्पर्यविषयपदार्थसंसर्गप्रमापूर्वकाणि योग्यतासत्तिमत्पदकदंबकत्वात्पटमानयेत्यादिवदित्याद्यनुमानेनैवशब्दार्थसिद्धेः। शब्दोनपृथक् प्रमाणमितिवदंति कथमागमोऽनुमानात्पृ-

१ नाव्याप्तिः । २ वक्ष्यमाणप्रकारेण ।

थक् प्रमाणमित्याशंक्य योग्यतादिसहकारजनितज्ञानस्यानुमानफलत्वाभावात्तथाभूतज्ञानजनकं वाक्यं पृथक् प्रमाणमवश्यमभ्युपेयमित्याशयेनाह ( वाक्यजन्यज्ञानेचेति ) तथाचासत्यपिव्याप्तिज्ञाने विद्यमानेष्वाकांक्षादिषु संसर्गज्ञानोपलंभान्नागमस्यानुमानेन्तर्भावः । क्ळृप्तेनानुमान प्रमाणेनैव निर्वाहे पृथक् प्रमाणं नकल्पनीयमिति यद्याग्रहस्तर्हि मनसैव क्ळृप्तेन प्रत्यक्षप्रमाणेन निर्वाहादनुमानमप्यतिरिक्तप्रमाणं नाभ्युपेयं यद्यनुमिनोमीत्यनुव्यवसायबलादभ्युपेयते ।तर्हि शब्दादमुमर्थं जानामीत्यनुव्यवसायबलादागमोवश्यमभ्युपगंतव्य इतिभावः । तात्पर्यज्ञानस्य बहुवादिभिरनंगीकारात्पृथगुपादानं क्रमेणाकांक्षादिस्वरूपमाह ( तत्रेति) आकांक्षादिषु चतुर्षु कारणेषु मध्ये ॥

**क्रियाश्रवणे कारकस्य कारकश्रवणे क्रियायाः करण श्रवणे इति कर्तव्यतायाश्च जिज्ञासाविषयत्वादजिज्ञासोरपि वाक्यार्थबोधात् योग्यत्वमुपात्तम् ॥**

कुत एतदित्याशंक्य क्रियादिश्रवणेकारकादेर्जिज्ञासाविषयत्वोपलंभात्पदार्थानां परस्परजिज्ञासाविषयत्वयोग्यत्वमाकांक्षास्वरूपमित्याह ( क्रियेति ) आनयेतिक्रियायाः श्रवणेघटमितिकारकस्यजिज्ञासाविषयत्वं घटमितिकारकस्य श्रवणेआनयेति क्रियाया दर्शपूर्णमासाभ्यांस्वर्गकामोयजेतेतिस्वर्गकरणश्रवणे समिधोयजति इडायजतीत्यादीति कर्तव्यतायास्तच्छ्रवणेकरणस्यचेत्यर्थः । ननु लाघवादावश्यकत्वाच्च विषयत्वपर्यंतमेवा कांक्षालक्षणमस्तु किंयोग्यत्वोपादानेनेतिचेत्तत्राह ( अजिज्ञासोरपीति ) तथाच जिज्ञासारहितस्य वाक्यजन्यज्ञानेपदार्थानां परस्परजिज्ञासाविषयत्वाभावेपि तद्योग्यत्वसत्त्वान्नाव्याप्तिरित्यर्थः ॥

**तदवच्छेदकंच क्रियात्वकारकत्वादिकमिति नातिव्याप्तिगौरश्च इत्यादौ ॥**

ननु अत्र सास्तीत्याकांक्षाग्राहकं तदवच्छेदकं किमित्याकांक्षायामाह

( तदिति ) तथाच गौरश्व इत्यादौ क्रियात्वादेस्तदवच्छेदकस्याभावादाकांक्षासत्त्वान्नातिव्याप्तिरित्यर्थः ॥

**अभेदान्वयेच समानविभक्तकपदप्रतिपाद्यत्वं तदवच्छेदकमिति तत्त्वमस्यादिवाक्येषु नाव्याप्तिः ॥**

ननुतत्संहितेषु[1] नीलमुत्पलं तत्त्वमस्यादिवाक्येष्वाकांक्षावच्छेदकराहित्यादव्याप्तिरित्याशंक्याह ( अभेदान्वयइति ) अभेदेनान्वयोयत्रतत्त्वमस्यादिवाक्येऽवच्छेद्ययोग्यत्वलक्षणाकांक्षाया अनुगतत्वादवच्छेदकाऽननुगमो न दोषावह इतिमंतव्यम् ॥

**एतादृशाकांक्षाभिप्रायेणैव बलाबलाधिकरणे "सा वैश्वदेव्यामिक्षा वाजिभ्योवाजिनम्" इत्यत्र वैश्वदेवयागस्यामिक्षान्विततत्वेन न वाजिनाकांक्षेत्यादिव्यवहारः ॥**

नन्वन्वयबोधाभाव एवाकांक्षाकिंनस्यात्तस्याः प्रागभावात्मकतयाशाब्दज्ञानकारणत्वेन क्लृप्तत्वादित्याशंक्यैवंविधाकांक्षाभिप्रायेणैव मीमांसकैः श्रुतिलिंगादिबलाबलाधिकरणआकांक्षाया व्यवहृतत्वात्मैवमित्याह ( एतादृशेति ) तथाचतृतीयाध्यायतृतीयपादस्थजैमिनिसूत्रं 'श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति'। अत्र श्रुत्यादीनामेकविषयत्वसमवायेन विरोधसति कस्य प्राबल्यं कस्यदौर्बल्यमितिचिंत्यते। तत्र निरपेक्षोरवःश्रुतिः यथाव्रीहीनवहंतीत्यत्र क्रियाफलभागित्वं कर्मत्वंबोधयंती द्वितीयाश्रुतिर्निरपेक्षैव व्रीहीणामवघातशेषत्वं प्रतिपादयति। अर्थविशेषप्रकाशनसामर्थ्यंलिंगं। यथाबर्हिर्देवसदनंदामीत्यस्य मंत्रस्य लवनार्थप्रकाशकतया बर्हिर्लवनेविनियोगः परस्पराकांक्षावशात्क्वचिदेकस्मिन्नर्थेपर्यवसितानिपदानिवाक्यं, यथा "देवस्य त्वासवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामग्नयेजुष्टनिर्वपामि" इत्यत्र

---

1 आकांक्षासहितेषु।

लिंगेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यबलेन देवस्यत्वेत्यादिभागस्य विनियोगः ॥ लब्धवाक्यभावानां पदानां कार्यांतरापेक्षया वाक्यांतरेण संबंधे आकांक्षापर्य्यवसन्नं प्रकरणम्। यथासमिधोयजतीत्यादेर्दर्शपूर्णमासकथंभावाकांक्षायां पठनाच्छेषत्वम्। क्रमः स्थानमनेकस्याम्नातस्य सन्निधिविशेषाम्नानं यथादब्धिरसीत्यत्राग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणे विहिता मंत्रभागेपि क्रमेण मंत्रत्रयं पठितं तत्राग्नेयाग्नीषोमीययोर्लिंगेनैवद्वयोर्विनियोगसिद्धिः। दब्धिरसीत्यत्रतु न लिंगादिविनियोजकमस्ति किंतु यस्मिन्प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन्नेवप्रदेशे मंत्रेप्यस्य पाठ इति क्रमादुपांशुयागानुमंत्रणेस्यविनियोगः ॥ योगबलं समाख्या यथाहौत्रं औद्गात्रमित्यादौहोतुरिदंहौत्रमित्यादियोगबलेन हौत्रादिसमाख्यानि कर्माणि होत्रादिभिरनुष्ठेयानि प्रकृते श्रुतिवाक्यविरोधे वाक्यदौर्बल्योदाहरणं तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमिति। तत्र वाजिनस्य किंविश्वेदेवांगत्वं किंवा वाजिसंज्ञकदेवतांगत्वमिति संशये वाजमन्नमामिक्षातदेषामस्तीति व्युत्पत्त्या वाजिपदस्य विश्वेदेवपरत्वात्। वाजिभ्यो वाजिनमिति वाक्याद्वाजिनस्य विश्वेदेवतांगत्वमवगम्यते नचामिक्षया वाजिनबाधः किंतु तया सह विकल्पः समुच्चयोवेति प्राप्ते सिद्धांतः। नतावद्वाजिनस्य विश्वेदेवांगत्वंवैश्वदेवीति तद्धितश्रुत्याऽमिक्षया तेषां संबंधस्यौचित्यादस्येति सर्वनामार्थे तद्धितस्य स्मृतत्वात्सर्वनाम्नश्च सन्निहितविशेष्यसमर्पकत्वादामिक्षायाः श्रुतत्वेन तद्धितवाच्यत्वात् एवं चन विकल्पसमुच्चयौ कल्प्यौ विश्वेदेवसंबंधवत्यामिक्षयावाजिनाकांक्षाभावादिति ॥

---

१ समवेतार्थभागस्य लिंगेन निर्वापे विनियुज्यमानस्याग्नयेजुष्टं निर्वपामीतिमंत्रस्य संबंधीयो देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामिति भागस्तस्यैकवाक्यत्वबलेन विनियोग इति। २ दब्धिर्नामासीतिपाठांतरम्। दब्धिर्घातकमायुधमिति माधवः।

**ननु तत्रापि वाजिनस्य जिज्ञासाऽविषयत्वेपि तद्यो ग्यत्वमस्त्येव । प्रदेयद्रव्यत्वस्य यागनिरूपितजि ज्ञासाविषयतावच्छेदकत्वादितिचेत्, न,स्वसमानजा तीयपदार्थान्वयबोधविरहसहकृतप्रदेयद्रव्यत्वस्यैव तदवच्छेदकत्वेन वाजिनद्रव्यस्य स्वसमानजाती यामिक्षाद्रव्यान्वयबोधसहकृतत्वेन तादृशावच्छेद काभावात् ॥ ७ ॥**

ननु भवदभिमतस्याकांक्षालक्षणस्य वाजिनेपिसत्वात्कथमुक्ततन्नैरा कांक्ष्यव्यवहारोभवदुक्ताकांक्षासंभवादीत्याशयेन शंकते (नन्विति) तत्रापि सावैश्वदेव्यामिक्षेत्यादावपि यागनिरूपितजिज्ञासाविषयत्वावच्छेदकस्य प्रदेयद्रव्यत्वस्य सत्त्वादित्याह ( प्रदेयेति ) प्रदेयद्रव्यत्वस्य तदवच्छेद- कत्वे जनितान्वयबोधादपि वाक्यात्पुनरन्वयबोधापत्तेः स्वसमानजाती- येत्यादिविशेषणविशिष्टस्य तस्य तत्त्वांगीकाराद्वाजिनेतदसत्त्वादुक्तल- क्षणासंगमान्नोक्तदोष इत्याशयेन परिहरति ( नेति ) समभिव्याहृतप- देन स्मारितो यः स्वसमानजातीयः स्वसदृशः पदार्थस्तदन्वयबोधवि- रहेण सहकृतंयत्प्रदेयद्रव्यत्वं तस्यैव तदवच्छेदकत्वेन यागनिरूपित- जिज्ञासाविषयत्वावच्छेदकत्वेन वाजिनद्रव्यस्य स्वसदृशामिक्षापदार्थान्व- यबोधसहकृतत्वेन तद्विरहसहकृतप्रदेयद्रव्यत्वरूपावच्छेदकाभावा- दित्यर्थः ॥

**आमिक्षायांतु नैवं वाजिनान्वयस्य तदानुपस्थित त्वात् । उदाहरणांतरेष्वपि दुर्बलत्वप्रयोजक आकां क्षाविरह एव द्रष्टव्यः ॥**

नन्वस्तु वाजिनपदार्थेनैवान्वयबोधस्तथाचामिक्षायामेव तादृशावच्छे- दकाभावः किं नस्यादित्याशंक्याह ( आमिक्षायांत्विति ) प्रथमश्रुता-

मिक्षान्वयबोधकाले वाजिनान्वयबोधस्योत्थानाभावादितिहेतुमाह (वाजिनेति ) यथाश्रुतिवाक्यविरोधेवाक्यदौर्बल्यप्रयोजकआकांक्षाविरहस्तथोदाहरणांतरेष्वापि स एवेत्यातिदिशति ( उदाहरणांतरेष्वपीति ) तत्रश्रुतिलिंगविरोधेलिंगदौर्बल्यंयथा ऐन्द्यागार्हपत्यमुपतिष्ठत इति श्रूयतेतत्र संशयः किं कदाचनस्तरीरसिनेंद्रसश्चसिदाशुषे इत्यसावृगैंद्रीतेनेंद्रमंत्रेणेंद्रउपस्थेय उतगार्हपत्य इति भोइंद्रकदाचिदपि घातको न भवसि किंत्वाहुतिदत्तवते यजमानाय प्रीयसे इति इंद्रप्रकाशनसामर्थ्याल्लिंगादिंद्रउपस्थेय इति प्राप्ते सिद्धांतः गार्हपत्यमिति प्रत्यक्षश्रुत्यागार्हपत्योपस्थाने विनियुक्तस्य मंत्रस्य पुनर्विनियोगाकांक्षाया अनुदयाद्विनियोजकं लिंगं न प्राप्नोति येनेन्द्रोपस्थाने मंत्रोविनियुज्येतेति लिंगवाक्ययोर्विरोधेवाक्यदौर्बल्यं यथा दर्शपूर्णमासयोः श्रूयते ॥ स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठव्रीहीणां मेधसुमनस्यमान इति भोपुरोडाशतवसमीचीनं स्थानं करोमि तच्चस्थानं घृतस्य धारया सुष्ठुसेवितुं योग्यं कल्पयामि भो व्रीहि सारभूतस्त्वं समाहितमनस्कस्तस्मिन्समीचीने स्थाने उपविश तत्र स्थिरोभवेत्यर्थः ॥ तत्रायं सर्वोपि मंत्रः ॥ स्थानकरणे पुरोडाशस्थापने च विनियुज्यते किंवार्द्धद्वयमुभयत्र व्यवस्थितमितिसंशये तस्मिन्नित्यनेन तच्छब्देन प्रकृतवाचिना पूर्वोत्तरार्द्धयोरेकवाक्यत्वेसति मंत्रद्वयाभावात्सर्वोप्ययं मंत्रः स्थानकरणस्यपुरोडाशस्थापनस्य चांगं तत्रसर्वेणानेन मंत्रेण स्थानं कतव्यमिति विनियोजिका श्रुतिः कल्पनीया तथासर्वेण मंत्रेण पुरोडाशः स्थापनीय इत्यपि कल्पनीया सदनांगत्ववत्प्रतिष्ठापनांगत्वस्यापि तद्वाक्यबोधितत्वादिति प्राप्ते राद्धांतः पूर्वोत्तरार्द्धयोः परस्परान्वयेन संपन्नस्यैकवाक्यस्योत्तरार्द्धस्य सदनकरणे शक्तिमकल्पयित्वा सर्वमंत्रस्य सदनेविनियोक्तुमनर्हत्वात्पूर्वार्द्धस्य स्थापनेशक्तिमकल्पयित्वा स्थापनेसर्वमंत्रस्य विनियोक्तुमनर्हत्वाच्च लिंगकल्पनव्यवधाने श्रुतिं प्रति वाक्यं विप्रकृष्यते । प्रत्यक्षं तु लिंगद्वयं सन्निकृष्यते तथाच लिंगेन वाक्यबाधादर्द्ध-

द्वयमुभयत्र व्यवस्थितमिति अत्राप्याकांक्षाविरह एव वाक्यस्य दौर्बल्य-प्रयोजक इति वाक्यप्रकरणयोर्विरोधेप्रकरणदौर्बल्यम्। यथा सूक्तवाक्ये श्रूयते "अग्निषोमाविदंहविरजुषेतामवीवृधेतामहोज्यायोक्रांतां इन्द्राग्नीइदं-हविरजुषेतामवीवृधेतामहोज्यायोक्रांतामित्यादि"। तत्र संशयः देवता-पदैकवाक्यता भूतानीदंहविरजुषेतामित्यादीनि यानि पदानि तानि किं ततोविच्छिद्यान्यत्रापिप्रकरणाविशेषात्प्रयोक्तव्यानि उततत्तद्देवतापदैनै-कवाक्यतया तद्वदेवव्यवस्थितानीति। तत्र देवतावाचकाग्नीषोमादिपदं पौर्णमास्यादिकाले यथादैवतं विभज्य प्रयुज्यते। यत्विदं हविरित्या-दिकमवशिष्टं पदजातं तदग्नीषोममंत्रगतमप्यमावास्यायामग्नीषोमपदपरि-त्यागेन पठनीयम्। तथा इन्द्राग्नीमंत्रगतमपि पौर्णमास्यामिंद्राग्नीपदप-रित्यागेन पठनीयम्। तथासत्येषांमंत्रभागानां सर्वशेषत्वबोधको दर्श-पूर्णमासपाठोनुगृह्यते इति प्राप्ते सिद्धांतः अग्नीषोममंत्रशेषस्येंद्राग्नी-पदान्वयाश्रवणात्प्रकरणेन प्रथमं तदन्वयरूपं वाक्यं कल्पनीयम्। तेनच वाक्येनेंद्राग्नीप्रकाशनसामर्थ्यरूपं लिंगं कल्पते तेनचानेनमंत्रभागेनेन्द्राग्नी विषयाक्रियानुष्ठेयेति विनियोजिका श्रुतिः कल्प्यते ततः प्रकरणविनि-योगयोर्मध्ये त्रिभिर्व्यवधानं भवति अग्नीषोमपदान्वयरूपं वाक्यं श्रूयमा-णत्वाल्लिंगश्रुतिभ्यामेव व्यवहीयते। तस्माद्वाक्येन प्रकरणस्य बाधित-त्वात्तच्छेषस्तत्रैव व्यवतिष्ठते। अत्रापि विच्छिद्यान्यत्राप्रयोगे आकांक्षा-विरह एव कारणम्। स्थानप्रकरणयोर्विरोधेस्थानदौर्बल्यं यथा राज-सूये बहवः पश्चिष्टिसोमयागाः सर्वेफलवंतः समप्रधानाः तत्राभिषेचनी-योनामसोमयागः तत्सन्निधौविदेवनादयः समाम्नाताः अक्षैर्दीव्यतिरा-जन्यं जिनातिशौनः शेयमाख्यापयति इतिजिनाति जयति बह्वृचब्रा-ह्मणे समाम्नातं शुनःशेपविषयमाख्यानं शौनःशेपं तत्र संशयः ते विदे-वनादयः किं सर्वस्य राजसूयस्यांगमुताभिषेचनीयस्यैवेति तत्र सन्नि-धिवशाद्विदेवनादयोऽभिषेचनीयांगमिति प्राप्ते राद्धांतः राजसूयस्य कथं-भावाकांक्षायामनुवृत्तायां विहिताविदेवनादयः प्रकरणेन राजसूयशेषा-राजसूयश्च बहुयागात्मक इति तत्रत्य सर्वयागशेषभूतं विदेवनादिकम्।

नचाभिषेचनीयस्य काचिदाकांक्षाविदेवनादिष्वस्तिज्योतिष्टोमविकृतित्वेनातिदिष्टैः प्राकृतांगैरेवतदाकांक्षानिवृत्तेरिति । स्थानसमाख्ययोर्विरोधेसमाख्यादौर्वल्यं यथा पौरोडाशिकसमाख्याते दर्शपूर्णमासकांडे सान्नाय्यपात्रशुंधनं समाख्यातम् । तत्र शुंधध्वं दैव्यायकर्मणेदेवयज्याया- इति मंत्रोदाहरणं स किं पुरोडाशपात्रांगमुतसान्नाय्यपात्रांगमिति संशये पौरोडाशिकमिति समाख्याते कांडे पठितत्वात्समाख्यया पुरोडाशकांडांगानामुलूखलजुह्वादीनामपिशोधनेङ्गमिति प्राप्ते सिद्धांतः । पौरोडाशिकमिति समाख्यायां प्रकृतिःपुरोडाशमभिधत्ते तद्धितप्रत्ययश्च कांडम् । नचैतावता कृत्स्नपुरोडाशपात्राणां सन्निधिरत्रप्रत्यक्षोऽस्ति किंत्वर्थात्प्रकल्प्यस्तस्मात्काण्डसमाख्यया सन्निधिं परिकल्प्य तत्सन्निध्यन्यथानुपपत्त्या परस्पराकांक्षारूपकृत्स्नपात्रप्रकरणं कल्पयित्वा वाक्यलिंगश्रुतीः परिकल्प्य तया श्रुत्या विनियोग इति समाख्यायां विप्रकर्षः । सन्नाय्यपात्राणां शोधनमंत्रसन्निधिस्तुप्रत्यक्षः इध्माबर्हिः सम्पादनस्य मुष्टिनिर्वापस्य चान्तराले सान्नाय्यपात्राणां देश उक्तः मंत्रश्चेध्माबर्हिर्निर्वापविषययोर्मंत्रानुवाकयोर्मध्यमेनुवाके पठ्यते तेनच प्रत्यक्षसन्निधिना प्रकरणादीनां चतुर्णामेवकल्पनात् सन्निधिः सन्निकृष्यते तस्मात्क्रमेणसमाख्यां बाधित्वासान्नाय्यपात्रशोधनांगमेवमंत्रः स्थानं सन्निधिः क्रम इत्यनर्थांतरमिति ॥

**योग्यताच तात्पर्यविषयीभूतसंसर्गाबाधः वह्निना सिंचतीत्यादौ तादृशसंसर्गबाधान्नयोग्यता "स प्रजापतिरात्मनो वपामुदखिदत्" इत्यादावपि तात्पर्य्यविषयीभूतपशुप्राशस्त्याबाधात् योग्यता । तत्त्वमस्यादि वाक्येष्वपि वाच्याभेदबाधेपि लक्ष्यस्वरूपाभेदे बाधाभावात् योग्यता ॥**

योग्यतां लक्षयति ( योग्यतेति ) एतावल्लक्षणाभिधानफलमाह । ( वह्निनेति ) तथाप्यस्तुसंसर्गाबाधोयोग्यतेत्याशंक्याह ( सप्रजापति-

रिति ) एवं च सांप्रदायिकतत्त्वमस्यादिवाक्यार्थोऽप्युपपन्न इत्याह ( तत्त्वमस्यादीति ॥

**आसत्तिश्चाव्यवधानेन पदजन्यपदार्थोपस्थितिः मानांतरोपस्थापितपदार्थस्यान्वयबोधाभावात्पदजन्येति । अत एवाश्रुतपदार्थस्थले तत्तत्पदाध्याहारः द्वारमित्यादौ 'पिधेहि' इति ॥ अत एव 'ईषेत्वा' इत्यादिमंत्रे 'छिनद्मि' इति पदाध्याहारः । अत एव विकृतिषु "सूर्य्याय जुष्टं निर्वपामि" इति पदप्रयोगः ॥**

क्रमप्राप्तामासत्तिं लक्षयति ( आसतिश्चेत्ति ) पदजन्येत्यस्य प्रयोजनमाह ( मानांतरेति ) यतोमानांतरोपस्थापितपदार्थस्यान्वयं बोधो नास्त्यत एवाश्रुतपदार्थस्थलेऽन्वयबोधयोग्यपदार्थोपस्थापकपदाध्याहारःसंगच्छते इत्याह ( अतएवेति ) अत एव वेदेपि तादृशपदाध्याहारइत्याह । ( अतएवेति ) द्वितीयाध्याये चिंतितं समेषुवाक्यभेदः । यत्रकर्मसमवेतार्थप्रकाशकं ऊनिर्वपामीत्यादिपदमास्ति तत्र सुगमं परिमाणम् । यत्रतु समवेतार्थपदाभावेन लौकिकविनियोगाभावे वाचनिको विनियोगः । स्वरूपतोगम्यते यथा 'इषेत्वोर्ज्जेति' तत्र संशयः किंप्राग्दृष्टार्थमंत्रावधेरेकमंत्रत्वमुतयावदेवमिथः संबंधमिषेत्वेति तावदेकं यजुरन्यच्च यजुरंतरमिति इषेत्वोर्ज्जेत्वेत्यत्र सोयंपदसमुदाय एकोमंत्रः तस्यादृष्टार्थत्वेनैकस्यैवादृष्टस्य कल्पने लाघवात् । नचोरुप्रथस्वेत्यादिमंत्रवदनुष्ठेयार्थस्मारकता संभवति क्रियापदाभावेन तदर्थप्रतीत्यभावादिति प्राप्ते राद्धांत इषेत्वोर्जेत्वेत्यादौ यजुर्भेदः इषेत्वेति 'छिनत्ति' 'ऊर्ज्जेत्वा' इत्यनुमार्ष्टीतिपलाशशाखायाः छेदनमार्ज्जनयोर्विनियोगात्ततस्तदनुसारेण छिनद्मि अनुमाज्ज्मीत्यर्थभेद इति अतएव मानान्तरेत्याद्युक्तहे-

तोरेव नवमाध्यायप्रथमेपादे स्थितं गुणशब्दस्तथेतिचेदिति देवस्य-त्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्यामग्नये जुष्टं निर्वपा-मीति मंत्रे सावित्रश्विपूषशब्दानां विकृतिषूहाभावः उक्तस्तत्राग्निश-ब्दोपि किमसमवेतवचनोनोहितव्य उतसमवेतवचन ऊहितव्य इति । संशये देवतान्तरवाचिसवित्रादिशब्दवदग्निशब्दस्यापि निर्वापस्ताव-कत्वेन पाठान्नोहनीय इति प्राप्ते राद्धांतः सवित्रादिशब्दानां कर्म्मण्य-समवेतार्थत्वेनाग्निशब्दस्य चाग्नेयेकर्म्मणि समवेतार्थत्वेन दृष्टांतवैषम्या-दूहनीय इति ननु निर्वापात्पूर्वंहविषो जुष्टत्वाभावात्तद्योगादग्निशब्दो-पिनस्यादितिचेन्न जुष्टं यथाभवति तथा निर्वपामीतिक्रियाविशेषण-त्वेन भविष्यज्जोषणपरत्वे सति समवेतार्थत्वात्तस्मात्सौर्ययागे सूर्य्याय जुष्टं निर्वपामीत्येवमूहनीयमिति ॥ १० ॥

**पदार्थश्च द्विविधः शक्यो लक्ष्यश्चेति । तत्र शक्ति र्नाम पदानामर्थेषु मुख्यावृत्तिः यथा घटपदस्य पृथु बुध्नोदराद्याकृतिविशिष्टे वस्तुविशेषे वृत्तिः । साच शक्तिः पदार्थान्तरम् । सिद्धान्ते कारणेषु कार्य्यानु कूलशक्तिमात्रस्य पदार्थान्तरत्वात् ॥ ११ ॥**

पदजन्यपदार्थोपस्थितिरित्युक्तम् । तत्र पदार्थः कतिविध इत्यपे-क्षायामाह ( पदार्थश्चेति ) पदनिष्ठशक्तिविषयः शक्यः पदवृत्तिलक्ष-णाविषयो लक्ष्यः गौण्यावृत्तेः लक्षितलक्षणायामन्तर्भावस्य वक्ष्यमा-णत्वाद्वृत्तेर्द्वैविध्यात्पदार्थद्वैविध्यम् । केवललक्षणायाश्च गौण्यनन्तर्भावा-च्छक्योलक्ष्यश्चेति विभाग इतिभावः । तयोः शक्तिलक्षणानिरूपणा-

---

१ गुणशब्दः जुष्टशब्दार्थे गुणभूताग्न्यादिवाचकः शब्दः तथासवित्रादिशब्दवत्स्ता-वकः जुषधातोः कर्मणिभूतार्थेनिष्ठाविहिता तथान्वजुषधातोर्भक्षणमर्थः । अग्नये इति तादर्थ्येचतुर्थी । अग्निकर्तृकभूतकालीनभक्षणकर्मीभूतहविः कर्मकनिर्वापंभाव-यामीति वाक्यार्थोवाच्यः । सच बाधितः निर्वापकालेऽग्निकर्तृकभक्षणस्य भूतत्वाभा-वादतः स्तुत्यर्थः । इति विकृतौतस्यापिनोह इतिभावः ।

यत्तन्निरूपणत्वाच्छक्यस्वरूपावगमार्थमादौशक्तिं निरूपयति ( तत्रेति ) तयोः शक्यलक्ष्ययोः शक्याविशेषणीभूताशक्तिरित्यर्थः । अर्थेषुवृत्तिः अर्थविषयणीवृत्तिः पदानां कार्य्यान्वितेष्वेवार्थेषु वृत्तिं वदतां प्राभाकराणां निराकरिष्यमाणत्वादाह ( अर्थेष्विति ) लक्षणायामतिव्याप्तिवारणायाह ( मुख्येति ) उदाहरति ( यथेति ) पृथु विपुलं च तद्बुध्नंच वर्तुलंच यदुदरं तदादिर्यस्यग्रीवादेस्तदाकृतिविशिष्ट इत्यर्थः । शक्तिः संकेतः सच परमेश्वरेच्छा अनेन पदेनायमर्थोबोद्धव्य इत्येवंरूपा नतुपदार्थांतरं मानाभावादिति नैयायिकास्तान्निराचष्टे ( साचेति ) येषांमतेशक्तिमात्रस्यपदार्थांतरता तेषांमते पदनिष्ठाशक्तिः पदार्थांतरमिति किमुवक्तव्यमित्याह ( सिद्धांतइति ) तथाचशक्तेः पदार्थांतरत्वे दाहादिलक्षणकार्य्यानुपपत्तिरेवप्रमाणं प्रतिबंधकाभावस्यभावतयानहेतुत्वं दाहादिकार्य्यं वह्निनिष्ठस्वानुकूलशक्तिपूर्वकंकार्य्यत्वाद्घटवदितिभावः । उपलक्षणमेतत् परास्य शक्तिर्विविधैवश्रूयते शक्तयः सर्वभावानामचिंत्याज्ञानगोचरा इत्यादिश्रुतिस्मृतिवचनान्यापि पृथक्शक्तिसद्भावे मानमित्यर्थः ॥

**साच तत्तत्पदजन्यपदार्थज्ञानरूपकार्य्यानुमेया तादृशशक्तिविषयत्वं शक्यत्वं । तच्च जातेरेव नव्यक्तेः । व्यक्तीनामानंत्येन गुरुत्वात् । कथं तर्हि गवादिपदाद्व्यक्तिभानमितिचेत् जातेर्व्यक्तिसमानसंवित्संवेद्यत्वादितिब्रूमः ॥**

ननु सन्तुकारणेषु कार्यानुमेया शक्तयः प्रकृते केन कार्य्येण पदनिष्ठाशक्तिरनुमीयत इत्यपेक्षायामाह ( साचेति ) पदार्थज्ञानं पदनिष्ठस्वानुकूलशक्तिपूर्वकं पदजन्यपदार्थज्ञानरूपकार्य्यत्वादित्येवमनुमेयेत्यर्थः । एवं शक्तिं निरूप्य शक्यं लक्षयति ( तादृशेति उक्तलक्षणशक्तिविषयत्वं तच्च शक्यत्वं जातेर्व्यक्तेर्वाइत्यपेक्षायामाह ( तच्चेति ) जातिरत्रानुगतो

धर्मः परैर्जातिशब्देन व्यवह्रियमाणस्तेनजातित्वोपाधित्वपरिभाषायाः सर्वप्रमाणागोचरत्वोक्तिविरोधो न शंक्यः तत्रहेतुमाह ( व्यक्तीनामिति ) नन्वनुगतधर्मस्य शक्यत्वाभ्युपगमे गामानय पशुमालभेदित्यादौ गवादिपदाद्व्यक्तिभानं न स्यादित्याशंकते ( कथमिति ) यद्यपि जातिरेवशक्या तथापि धर्म्मतद्वतोस्तादात्म्यादेकसंवितिवेद्यत्वाद्व्यक्तिसमानसंवितिसंवेद्यजातिभानसमये व्यक्तिभानमविरुद्धमित्याह ॥

**यद्वा गवादिपदानां व्यक्तौ शक्तिः स्वरूपसती नतु ज्ञाताहेतुः जातौतु ज्ञाता न व्यक्त्यंशे शक्तिज्ञानमपिकारणं गौरवात् ॥**

( जातेरिति) ननु पदाद्व्यक्तिसंविदेव दुर्लभा तत्प्रयोजकशक्तेरभावादित्यरुचेराह ( यद्वेति ) स्वरूपसती स्वरूपेणैववर्तमाना व्यक्तिबोधकगवादिपदनिष्ठसामर्थ्यस्वरूपमस्त्येवेत्यर्थः । व्यावर्त्यमाह ( नत्विति ) गवादिपदाद्व्यक्तिभानार्थं गवादिपदानां व्यक्तौ शक्तिरस्तीति ज्ञानं नापेक्षितमित्यर्थः । एतदेवस्पष्टयति ( जाताविति ) गवादिपदानां जातौशक्तिरितिज्ञाताजातिभानहेतुरित्यर्थः । व्यक्तिभाने शक्तिः कारणं नतु तज्ज्ञानमपीत्याह ( नेति ) तत्रहेतुमाह ( गौरवादिति ) उभयत्र शक्तिज्ञानस्य कारणत्वकल्पने गौरवात् ॥

**जातिशक्तिमत्त्वाज्ञाने सति व्यक्तिशक्तिमत्त्वज्ञानं विना व्यक्तिधीविलंबाभावाच्च अत एव न्यायमतेप्यन्वये शक्तिः स्वरूपसतीति सिद्धान्तः ज्ञायमानशक्तिविषयत्वमेव वाच्यत्वमिति जातिरेव वाच्या ॥**

नन्वावश्यकत्वाद्गौरवं न दोषावहमित्याशंक्याह ( जातीति ) यतः शक्तिज्ञानं विनैवयस्य ज्ञानं तज्ज्ञानार्थशक्तिज्ञानकल्पनमनुचितम्।अतएव नैयायिकैर्गवादिपदार्थस्यपदार्थांतरान्वये शक्तिःस्वरूपसती स्वीकृतेत्याह ( अतएवेति ) नन्वेवं तर्हिव्यक्तिरपि शक्या शक्तिविषयत्वं शक्यत्व-

मित्युक्तत्वाद्व्यक्तौच शक्तेःस्वीकारात्तथाचजातेर्व्यक्तेश्च शक्यत्वे गौरव-मित्याशंक्यास्मिन्पक्षे ज्ञायमानशक्तिविषयत्वं न तु शक्तिविषयत्वमतो-नोक्तदोष इत्याह ( ज्ञायमानेति ) ॥

**अथवा व्यक्तेर्लक्षणयावगमः यथा नीलो घट इत्यत्र नीलशब्दस्य नीलगुणविशिष्टे लक्षणा तथा जाति वाचकस्य तद्विशिष्टे लक्षणा तदुक्तं अनन्यलभ्यो हि शब्दार्थः, इति एवं शक्यो निरूपितः ॥**

ननु व्यक्तेरशक्यत्वे तत्र शक्तिकल्पनमपि वृथा तज्ज्ञानस्य लक्ष-णयैव संभवादन्वयस्य च वाक्यगम्यत्वेन पदशक्त्यविषयत्वादित्यरुचेः पक्षांतरमाह ( अथवेति ) तथाचगवादिपदस्य जातौ शक्तिः तद्विशि-ष्टव्यक्तौ लक्षणेतिभावः । केवलस्य शक्तिगम्यत्वं विशिष्टस्य लक्षणाग-म्यत्वं क्वदृष्टमित्यपेक्षायामाह ( यथेति ) अत्रमीमांसकसम्मतिमाह ( तदुक्तमिति ) अनन्यलभ्यो लक्षणादिना लभ्यो यो नभवति सशब्दार्थः शब्दशक्तिगम्य इत्यर्थः । शक्यनिरूपणमुपसंहराति ( एव-मिति ) ॥

**अथलक्ष्यपदार्थो निरूप्यते ॥**

लक्षस्य शक्यनिरूपणायत्तनिरूपणत्वात्तन्निरूपणानन्तरं लक्ष्यपदा-र्थनिरूपणं प्रतिजानीते ( अथेति ) ॥ १६ ॥

**तत्र लक्षणाविषयो लक्ष्यः लक्षणाच द्विविधा केवल लक्षणा लक्षितलक्षणाचेति । तत्र शक्यसाक्षात्सं बन्धः केवललक्षणा यथा गंगायांघोष इत्यत्र प्रवाह साक्षात्संबंधिनि तीरे गंगापदस्य केवललक्षणा ॥ यत्र शक्यपरम्परासंबंधेनार्थान्तरप्रतीतिस्तत्र लक्षितल क्षणा यथा द्विरेफपदस्य रेफद्वये शक्तस्य भ्रमरपद**

**घटितपरम्परासंबन्धेन मधुकरे वृत्तिः।गौण्यपि लक्षितलक्षणैव यथासिंहो माणवक इत्यत्र सिंहशब्दवाच्यसंबंधिक्रौर्य्यादितत्संबन्धेन माणवकस्य प्रतीतेः ॥**

तत्र शक्यनिरूपणानन्तरनिरूपणविषयीभूते लक्ष्ये सति तथाभूतनिरूपणविषयीभूतो लक्ष्योलक्षणाविषय इतिवा लक्ष्यज्ञानस्य लक्षणाज्ञानाधीनत्वात्तां निरूपयति (लक्षणेति) तत्र केवललक्षणालक्षितलक्षणयोर्मध्ये उदाहरणमाह ( यथेति ) यथागंगायां घोष इत्यस्मिन् वाक्ये गङ्गापदवाच्यप्रवाहेणसाक्षात्संबंधवति तीरे गंगापदस्य केवललक्षणावृत्तिः लक्षितलक्षणां लक्षयति ( यत्रेति ) शक्यपरम्परासंबन्धोलक्षितलक्षणेत्यर्थः । एतदुदाहरणमाह ( यथेति )यथा द्विरेफपदस्य शक्यरेफद्वयघटितभ्रमरपदद्वारातदर्थेवृत्तिरित्यर्थः । ननु पदार्थश्च द्विविध इत्युक्ता वृत्तिद्वैविध्यनिरूपणमयुक्तं गौण्यावृत्तेर्विद्यमानतया वृत्तेस्त्रैविध्येन पदार्थस्यत्रैविध्यादित्याशंक्य गौण्यावृत्तेर्लक्षितलक्षणान्तर्भावान्नोक्तदोष इत्याशयेनाह ( गौण्यपीति ) तल्लक्षणं गौण्यां योजयति ( सिंहइति ) ॥

**प्रकारान्तरेण लक्षणा त्रिविधा जहल्लक्षणा अजहल्लक्षणा जहदजहल्लक्षणाचेति तत्र शक्यमनन्तर्भाव्य यत्रार्थान्तरप्रतीतिस्तत्रजहल्लक्षणा यथाविषंभुंक्ष्वेत्यत्र स्वार्थंविहाय शत्रुगृहे भोजननिवृत्तिर्लक्ष्यते यत्र शक्यार्थमंतर्भाव्यैवार्थांतरप्रतीतिस्तत्राजहल्लक्षणा यथा–शुक्लोघट इत्यत्र हि शुक्लशब्दः स्वार्थं शुक्लगुणमन्तर्भाव्यैव तद्वति द्रव्ये लक्षणया वर्तते यत्र हि विशिष्टवाचकः शब्दः एकदेशं विहाय एकदेशे वर्तते तत्र जहदजहल्लक्षणा यथा! सोयं देवदत्त इति अत्र**

हि पदद्वयवाच्ययोर्विशिष्टयोरैक्यानुपपत्त्या पदद्व यस्य विशेष्यमात्रपरत्वम् ॥

प्रकारांतरेण लक्षणां विभजते ( प्रकारान्तरेणेति ) तत्र तिसृषु लक्षणासु मध्ये यत्र यस्मिन्पदे वाक्येवाशक्यार्थमनन्तर्भाव्यार्थान्तरस्य भानं तत्र जहल्लक्षणा शक्यसंबंधिमात्रविषयावृत्तिरित्यर्थः। यद्यपि गंगायां घोषः प्रतिवसतीत्यत्र गंगापदे शक्यार्थप्रवाहरूपमनन्तर्भाव्य तीररूपस्यार्थान्तरस्य प्रतीतिरस्त्यतोगंगापदं जहल्लक्षणोदाहरणं तथापि तस्य सर्वैरुदाहृतत्वात्सिद्धवत्कृत्वावाक्यमुदाहरति ( यथेति ) अत्रास्मिन्वाक्ये अजहल्लक्षणां लक्षयति ( यत्रेति ) शक्यार्थविशिष्टविषयावृत्तिरजहल्लक्षणेत्यर्थः। उदाहरति ( यथेति ) तृतीयां लक्षयति(यत्रहीति) शक्यैकदेशमात्रवृत्तिरित्यर्थः। उदाहरणमाह ( यथेति )॥

यथावा तत्त्वमसीत्यादौ तत्पदवाच्यस्य सर्वज्ञत्वादिविशिष्टस्य त्वं पदवाच्येनान्तःकरणविशिष्टेनैक्या योगादैक्यसिद्धचर्थं स्वरूपे लक्षणेति सांप्रदायिकाः ॥

तत्त्वमसीत्यादिकमपि जहदजहल्लक्षणोदाहरणं सांप्रदायिकैराश्रितमित्याह ( यथावेति ) ॥

वयन्तु ब्रूमः सोयं देवदत्तः तत्त्वमसीत्यादौ विशिष्ट वाचकपदानामेकदेशपरत्वेपि न लक्षणा शक्त्युप स्थितयोर्विशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवाभेदान्वयाविरोधात् ॥ यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्त्वस्यायो ग्यत्वेपि योग्यघटव्यक्त्या सहानित्यत्वान्वयः यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिः तत्रैवस्वातं त्र्येणोपस्थितये लक्षणाभ्युपगमः यथा घटोनित्य

इत्यत्र घटपदाद्घटत्वस्य शक्त्यास्वातंत्रेणानुप स्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा ॥

वयंतुलक्षणाविनैवैक्यसिद्ध्यर्थमेवं ब्रूम इत्याह ( वयंत्विति ) ननु लक्षणामृते एकदेशपरत्वं कुत इत्यतआह ( शक्तीति ) नन्विदं क्वदृष्ट-मित्यपेक्षायामाह ( यथेति ) स्वतंत्रस्यैवान्वययोग्यत्वाद्यत्र पदार्थैकदे-शस्य शक्त्यैवस्वातंत्रेणोपस्थितिः, न तत्र लक्षणा । यत्रतु तस्य शक्त्या-विशेषणतयोपस्थितिस्तत्र तस्यस्वातंत्र्योपस्थितये लक्षणास्वीक्रियते इत्याह ( यत्रेति )

एवमेव तत्त्वमसीत्यादिवाक्येपि न लक्षणा शक्त्या स्वातंत्र्येणोपस्थितयोस्तत्त्वं पदार्थयोरभेदान्वये बाधकाभावात् अन्यथा गेहे घटः घटे रूपं घटमानये त्यादौ घटत्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वं लक्षणयैव स्यात् । तस्मात्तत्त्वमसीत्यादिवाक्येषु आचार्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या ॥

उक्तमर्थं प्रकृते योजयति ( एवमिति ) विपक्षे बाधकमाह ( अन्य-थेति ) तर्हि तत्त्वमस्यादिवाक्ये किमित्याचार्यैर्लक्षणास्वीकृतेत्याशंक्याह ( तत्वमसीति ॥

जहदजहल्लक्षणोदाहरणंतु काकेभ्यो दधिरक्ष्यतामि त्याद्येव तत्र शक्यकाकपरित्यागेनाशक्यदध्युपघा तकत्त्वपुरस्कारेण काकेऽकाकेपि काकशब्दस्यप्र वृत्तेः लक्षणाबीजं तु तात्पर्य्यानुपपत्तिरेव नतवन्वया

**नुपपत्तिः काकेभ्योदधिरक्ष्यतामित्यत्रान्वयानुपपत्ते रभावात् गंगायां घोष इत्यादौ तात्पर्य्यानुपपत्तेरपि संभवात् ॥**

तर्हि जहदजहल्लक्षणोदाहरणाभावात्किनैवाभ्युपयेत्याशंक्याह ( जहदजहल्लक्षणेति ) छत्रिणो यांतीत्यादिकमादिपदार्थः । ननु शक्यैकदेशमात्रवृत्तित्वं ह्येतल्लक्षणं तच्चात्रनायाति, श्वादेः काकैकदेशत्वाभावादित्याशंक्यास्मन्मते नेदमेतल्लक्षणं किंतु शक्याशक्यगोचरवृत्तित्त्वं तच्चोक्तोदाहरणेस्तीत्याह ( शक्येति ) अन्येतु लक्षणांविना वाच्यैकदेशमात्रपरता पदानां न संभवति। गेहेघट इत्यादावपि आधाराधेयभावेनान्वितयोर्गेहघटयोस्तदवच्छेदकत्वेन गेहत्वघटत्वयोरन्वयात् । तत्त्वमस्यादिवाक्येपि साक्षादवच्छेदकत्वेन वाऽन्वयस्यावश्यकतयाऽखण्डार्थत्वासिद्धिरित्याहुः, सम्प्रतिलक्षणाबीजमाह ( लक्षणेति ) नन्वन्वयानुपपत्तेस्तद्बीजत्वाभावे कथं गंगायांघोष इत्यत्रलक्षणेत्याशंक्याह ( गंगायामिति ) ॥

**लक्षणा च न पदमात्रवृत्तिः किन्तुवाक्यवृत्तिरपि यथा गंभीरायां नद्यां घोष इत्यत्र गम्भीरायां नद्या मिति पदद्वयसमुदायस्य तीरे लक्षणा ॥**

यथाशक्तिपदमात्रवृत्तिस्तथावृत्तित्वाल्लक्षणापीतिनैयायिकास्तान्निराचष्टे (लक्षणाचेति) उक्तानुमाने शक्तित्वमुपाधिस्तथाच गंभीरायां नद्यां घोष इत्यादौ नद्यादिपदमात्रे लक्षणायां विनिगमकाभावेन समुदाये एवलक्षणायास्त्वयाप्यवश्यमंगीकार्य्यत्वातपदमात्रवृत्तित्वे वृत्तित्वं न नियामकं, अपितु शक्तित्वे सति वृत्तित्वं गुरुभूतमपीत्याशयेनाह (यथेति )॥

**ननु वाक्यार्थस्याशक्यतया कथं शक्यसंबंधरूपा लक्षणा उच्यते शक्त्या यत्पदसंबंधेन ज्ञाप्यते तत्सं बन्धो लक्षणा शक्तिज्ञाप्यश्च यथा पदार्थः तथा**

वाक्यार्थोऽपीति न काचिदनुपपत्तिः । एवमर्थवादवाक्यानां प्रशंसारूपाणां प्राशस्त्ये लक्षणा सोरोदीदित्यादिनिंदार्थवाक्यानां निन्दितत्वे लक्षणा। अर्थवादगतपदानां प्राशस्त्यादिलक्षणाभ्युपगमे एकेन पदेन लक्षणया तदुपस्थितिसंभवे पदांतरवैयर्थ्यंस्यात् । एवं च विध्यपेक्षितप्राशस्त्यरूपपदार्थप्रत्यायकतया अर्थवादपदसमुदायस्य पदस्थानीयतया विधिवाक्येन एकवाक्यत्वं भवतीत्यर्थवादपदानां पदैकवाक्यता ॥

ननुपदस्यैवशक्तत्वेन तदर्थस्य शक्यतया तत्संबंधिन एव लक्ष्यत्वात्कथं वाक्यवृत्तिलक्षणाविषयत्वं वाक्यार्थसम्बंधिन इत्याशंकते ( नन्विति ) शक्यशब्देनेहपदनिष्ठशक्तिज्ञाप्यो विवक्षितः सच पदार्थद्वारा वाक्यार्थोऽपीति तत्संबंधिन्यपि लक्षणा न विरुध्यत इत्याह ( उच्यते इति ) पदेन स्वनिष्ठशक्त्या यज्ज्ञाप्यते तत्संबंधो लक्षणा।तथाचेदं लक्षणमुभयसाधारणत्वादावश्यकमित्याह ( शक्तिज्ञाप्यश्चेति ) यथालोकेतथावेदेपि बोध्यमित्याह ( एवमिति ) वायुर्वैक्षेपिष्ठादेवतेत्यादीनामर्थवादवाक्यानां ननु तत्रपदानां लक्षणा कुतो न स्यादित्यत आह ( अर्थवादेति ) तथाचार्थवादवाक्यस्य विधिनैकवाक्यत्वे पदैकवाक्यत्वव्यवहारस्तेनैव फलित इत्याह ( एवञ्चेति ) ॥

क्व तर्हि वाक्यैकवाक्यता यत्र प्रत्येकं भिन्नभिन्नसंसर्गप्रतिपादकयोर्वाक्ययोराकांक्षावशेन महावाक्यार्थबोधकत्वं यथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादिवाक्यानां "समिधो यजति" इत्यादिवाक्या

नांच परस्परापेक्षितांगांगिबोधकवाक्यतयैकवाक्यता तदुक्तं भट्टपादैः ॥

"स्वार्थबोधे समाप्तानामंगांगित्वाद्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते"–

इति। एवं द्विविधोपि पदार्थो निरूपितः ॥

नन्वर्थवादपदसमुदायस्य पदस्थानीयत्वे तस्य विधिवाक्येनैकवाक्यता यदि पदैकवाक्यता तर्हि क्वाक्यैकवाक्यतेति ॥ प्रसंगात्पृच्छति (क्वेति) अर्थवादवाक्यानां स्वार्थे तात्पर्याभावेन प्राशस्त्यावबोधकतयास्वार्थावबोधकवाक्यत्वाभावाद्वाक्यैकवाक्यतायोग्यत्वेपि वाक्यार्थावबोधकयोर्वाक्ययोर्यत्रैकवाक्यत्वं तत्र वाक्यैकवाक्यत्वमित्याह ( यत्रेति ) तदुदाहरणमाह ( यथेति ) एकवाक्यताप्रयोजकमाह ( परस्परेति ) दर्शपूर्णमासाभ्यामित्यादिवाक्यानामंग्यवबोधकत्वं समिधोयजति इडायजतीत्यादिवाक्यानामंगावबोधकत्वं तदवबोधकत्वादाकांक्षाविषयत्वं तत्त्वादेकवाक्यतेत्यर्थः। स्वोक्तेऽर्थे भट्टपादाचार्य्यवाक्यं संवादयति (तदुक्तमिति) प्रथमं स्वार्थबोधेपर्य्यवसानं प्राप्तानां वाक्यानामंगांगिभावाद्यपेक्षयापुनर्मिलित्वा वाक्यैकवाक्यत्वं संपद्यत इत्यर्थः। पदार्थनिरूपणमुपसंहरति ( एवमिति ) ॥

तदुपस्थितिश्चासत्तिः साच शाब्दबोधे हेतुः, तथैवान्वयव्यतिरेकदर्शनात्। एवं महावाक्यार्थबोधेऽवांतरवाक्यार्थबोधो हेतुः तथैवान्वयाद्यवधारणात्॥

क्रमप्राप्तामासत्तिं लक्षयति ( तदिति ) पदजन्यपदार्थस्मृतिरित्यर्थः। ननु शाब्दबोधो उक्तासत्तिहेतुरुततज्ज्ञानमित्यपेक्षायां सैवहेतुर्नतज्ज्ञानमित्याह (साचेति) अत्र किम्प्रमाणमित्यत आह ( तथैवेति ) परस्परान्वययोग्यपदार्थोपस्थितिसत्वे शाब्दबोधो भवति, तदभावे नेत्यन्वयव्यतिरेकदर्शनात्। यद्वा मास्त्वासत्तिः शाब्दबोधे हेतुः काक्षतिरित्याशंक्याह

( साचेति ) अत्रमानमाह ( तथैवेति ) यथा शाब्दबोधे आकांक्षादिकं कारणमेवमाकांक्षादिना जातोवान्तरवाक्यार्थबोधो महावाक्यार्थज्ञाने कारणमित्याह ( एवमिति ) यतोऽवान्तरवाक्यार्थबोधसत्त्वे महावाक्यार्थबोधो भवति तदभावे शाब्दबोधोनेत्यन्वयव्यतिरेकाववधार्य्येते । अतः सहेतुरित्याह ( तथैवेति ) ॥

## क्रमप्राप्तं तात्पर्य्यं निरूप्यते ॥

क्रमप्राप्ततात्पर्य्यनिरूपणं प्रतिजानीते ( क्रमेति ) ॥

**तत्र तत्प्रतीतीच्छयोच्चरितत्त्वं न तात्पर्य्यम् । अर्थ ज्ञानशून्येन पुरुषेणोच्चरिताद्वेदादर्थप्रत्ययाभावप्रसं गात् । अयमध्यापकोऽव्युत्पन्न इतिविशेषदर्शनेन तत्र तात्पर्य्यभ्रमस्याप्यभावात् । नचेश्वरीयतात्प र्य्यज्ञानात् तत्र शाब्दबोध इतिवाच्यम् । ईश्वरानंगी कर्तुरपि तद्वाक्यार्थप्रतिपत्तिदर्शनात् । उच्यते । तत्प्रतीतिजननयोग्यत्वं तात्पर्यम् ॥**

तत्र निरूपणविषयीभूततात्पर्य्ये सति मौनिश्लोकेऽव्याप्तिदोषं सिद्धवत्कृत्याव्याप्तेरुदाहरणांतरमाह (अर्थेति) ननु तस्यार्थज्ञानरहितत्वेप्यनेन तदर्थप्रतीतीच्छया एतद्वेदवाक्यमुच्चारितमिति तदीयतात्पर्य्यभ्रमात्तदर्थज्ञानं भविष्यतीत्याशंक्याह ( अयमिति ) विशेषदर्शनेन भ्रमविरोध्यध्यापकनिष्ठाव्युत्पत्तिज्ञानेन ननु मास्तुतत्तात्पर्य्यज्ञानादेव वाक्यार्थबोध ईश्वरीयतात्पर्य्यज्ञानात्स भविष्यति तस्य साक्षात्प्रेरकत्वाभावेपि प्रेरकता मात्रेणोच्चारयितृत्वसम्भवादित्याशंक्य परिहरति ( नचेति ) ईश्वरानंगीकर्तुरपि सांख्यमीमांसकादेर्वैदिकवाक्यार्थप्रत्ययोपलब्धेरित्याह ( ईश्वरेति ) तर्हि कीदृशं तात्पर्य्यं भवतां विवक्षितमित्यपेक्षायामाह ( उच्यतइति ) पदार्थसंसर्गानुभवजननयोग्यत्वमित्यर्थः ॥

गेहेघट इति वाक्यं गेहघटसंसर्गप्रतीतिजननयोग्यं, न तु पटसंसर्गप्रतीतिजननयोग्यमिति तद्वाक्यं घट संसर्गपरं नतु पटसंसर्गपरमित्युच्यते। ननु सैंधवमा नय, इत्यादिवाक्यं यदा लवणानयनप्रतीतीच्छया प्रयुक्तं तदाऽश्वसंसर्गप्रतीतिजनने स्वरूपयोग्यतास त्वाल्लवणपरत्वज्ञानदशायामप्यश्वादिसंसर्गज्ञानाप त्तिरितिचेन्न तदितरप्रतीतीच्छयानुच्चरितत्वस्यापि तात्पर्य्यंप्रति विशेषणत्वात्। तथाच यद्वाक्यं यत्प्र तीतिजननस्वरूपयोग्यत्वे सति यदन्यप्रतीतीच्छया नोच्चरितं तद्वाक्यं तत्संसर्गपरमित्युच्यते॥

अत एव यद्यत्संसर्गप्रतीतिजननयोग्यं वाक्यं प्रयुज्यते तत्तत्परमेव व्यवह्रियत इत्याह ( गेंहेघटइति ) उक्ततात्पर्यलक्षणस्यानेकार्थपदप्रयो-गेतिव्याप्तिं शंकते ( नन्विति ) श्वेतो गच्छतीत्यादिवाक्यमादिप-दार्थः। विशेषणप्रदानेन दोषोद्धारान्नेत्याह ( नेति ) विशेषणप्रदानेफ-लितं तात्पर्य्यलक्षणमाह ( तथाचेति ) एवं च सैंधवमानयेति वाक्यमश्व-प्रतीतिजननयोग्यमपि भोजनप्रकरणे प्रयुक्तत्वाल्लवणान्यप्रतीतीच्छया-नुच्चरितत्वेन नाश्वसंसर्गज्ञानजनकमिति भावः॥

शुकादिवाक्येऽव्युत्पन्नोच्चरितवेदवाक्यादौच तत् प्रतीतीच्छायाएवाभावेन तदन्यप्रतीतीच्छयोच्चरित त्वाभावेन लक्षणसत्वान्नाव्याप्तिः नचोभयप्रतीतीच्छ योच्चरितेऽव्याप्तिः तदन्यमात्र प्रतीतीच्छयाऽनुच्चरित त्वस्यविवक्षितत्वात्॥

पूर्वोक्ताव्याप्तिदोषग्रस्तत्वमप्यस्य लक्षणस्य नास्तीत्याह ( शुका-दीति ) ननूभयप्रतीतीच्छयोच्चारिते लवणान्यप्रतीतीच्छयानुच्चरितत्वा

भावादव्याप्तिरित्याशंक्य परिहरति ( नचेति ) उभयप्रतीतीच्छयोच्चरितत्वेन तदन्यमात्रप्रतीतीच्छयानुच्चरितत्वस्य सत्त्वादित्याह ( तदन्यमात्रेति ) तदन्यमात्रप्रतीतीच्छयाऽनुच्चरितत्वमुभयप्रतीतीच्छयोच्चरितत्वमेवेति भावः ॥

**उक्तप्रतीतिमात्रजननयोग्यतायाश्चावच्छेदिकाशक्तिः। अस्माकंतु मते सर्वत्र कारणतायाः शक्तेरेवावच्छेदकत्वान्न कोपि दोषः । एवं तात्पर्य्यस्य तत्प्रतीतिजनकत्वरूपस्य शाब्दज्ञानजनकत्वे सिद्धे चतुर्थवर्णके तात्पर्य्यस्य शाब्दज्ञानहेतुत्वनिराकरणवाक्यं तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्य्यनिराकरणपरम् । अन्यथा तात्पर्य्यनिश्चयफलकवेदांतविचारवैयर्थ्य प्रसंगात् ॥**

नचैवमेकप्रतीतीच्छयोच्चरितेऽव्याप्तिरितिवाच्यम् । तदन्ययावत्प्रतीतीच्छयानुच्चरितत्वमित्यर्थस्य तदानींविवक्षितत्वात् ननूक्तप्रतीतिजननयोग्यतायाः किमवच्छेदकं तत्प्रतीतीच्छयोच्चरितत्वमिति चेत्, न, अव्युत्पन्नोच्चरितवेदवाक्यादावव्याप्तेरित्याशंक्याह ( उक्तेति ) नच शक्तिकल्पनेगौरवं शंक्यं सर्वत्र तस्या एवास्मन्मते क्लृप्तत्वादित्याह ( अस्माकंत्विति) तथाच यथ वह्न्यादिनिष्ठदाहादिजनकतावच्छेदिकाशक्तिरेवतथा-तात्पर्य्यनिष्ठशाब्दजनकतावच्छेदिकाशक्तिरेवेति न कोपि विरोध इत्यर्थः। ननु तात्पर्य्यस्य शाब्दज्ञानहेतुत्वेतन्निरासपरविवरणवाक्यविरोध इत्याशंक्योक्तरीत्या तात्पर्य्यज्ञानस्य शाब्दज्ञानहेतुत्वसिद्धौतद्वाक्यमन्यथा। व्याख्येयमित्याह ( एवमिति ) विपक्षे वाधकमाह ( अन्यथेति ) ॥

**केचित्तु शाब्दज्ञानत्वावच्छेदेन न तात्पर्य्यज्ञानं हेतुरित्येवपरं चतुर्थवर्णकवाक्यं तात्पर्यसंशयविपर्य्ययो**

**त्तरशाब्दज्ञानविशेषे च तात्पर्यज्ञानं हेतुरेव इदं वा क्यमेतत्परमुतान्यपरमिति संशये तद्विपर्ययेच तदु त्तरवाक्यार्थविशेषनिश्चयस्य तात्पर्य्यनिश्चयं विना नुपपत्तेरित्याहुः ॥ ३२ ॥**

तद्वाक्यस्यास्मदुक्ततात्पर्य्यनिराकरणपरत्वे अभेदरत्नकृन्मतमाह ( केचित्त्विति ) शाब्दज्ञानमात्रं प्रतिनहेतुरित्यर्थः । शाब्दज्ञानविशेषं प्रति तु हेतुरेवेत्याह (तात्पर्येति) तादृशशाब्दज्ञानं प्रति तस्य हेतुत्वमन्वयव्यतिरेकसिद्धमित्याह ( इदमिति ) केचित्पदेनास्मिन्मते स्वस्यानभिमतिः सूचिता । तद्बीजंतु शाब्दज्ञानेतात्पर्य्यज्ञानजन्यतावच्छेदकेशाब्दज्ञानत्वे लाघवं तात्पर्य्यसंशयविपर्ययोत्तरशाब्दज्ञानत्वे गौरवम् ॥

**तच्च तात्पर्य्यं वेदे मीमांसापरिशोधितन्यायादेवाव धार्य्यते लोके तु प्रकरणादिना ॥ तत्र लौकिकवा क्यानां मानान्तरावगतार्थानुवादकत्वं वेदेतु वाक्या र्थस्यापूर्वतया नानुवादकत्वं तत्र लोकेवेदेच कार्य्य पराणामिव सिद्धार्थानामपि प्रामाण्यं पुत्रस्ते जात इत्यादिषु सिद्धार्थेपि पदानां सामर्थ्यावधारणात् अत एव वेदांतवाक्यानां ब्रह्मणि प्रामाण्यं यथाचैत त्तथा विषयपरिच्छेदे वक्ष्यते ॥ ३३ ॥**

तादृशतात्पर्यावधारणं किं वेदेलोके वा एकमेवोतपृथक् इत्यपेक्षायामाह ( तच्चेति ) मीमांसापूजितविचारः पूर्वोत्तरभेदेनद्विविधः, आदिपदेनोपपदादिकं ग्राह्यं लोकवेदयोर्विशेषांतरमप्याह । ( तत्रेति ) लोकवेदयोर्मध्ये वाक्यार्थस्यापूर्वतया मानान्तरानवगमतया तद्वाक्यानां नानुवादकत्वम् । अथ लोकवेदयोः साम्यांशमाह ( तत्रेति ) लोकेवेदेचेति तत्र पदविवरणं गामानय पशुमालभेतेत्यादिकानां कार्य्यपराणां

कार्य्यान्विते स्वार्थेशक्तानां यथाप्रामाण्यं तथासिद्धवस्तुपराणामपि प्रामाण्यं, नतुप्राभाकराणामिवकार्यपराणामेवेत्यर्थः। तत्रहेतुमाह (पुत्र इति। अन्यथा वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यं नस्यादित्याह (अतए-वेति) यत एव सिद्धार्थानां वाक्यानां प्रामाण्यमत एवेत्यर्थः। नन्वस्तु कार्य्यपराणामेव प्रामाण्यं वेदान्तानामपि प्रतिपत्तिविधिपरत्वेन तद्भ-विष्यति तस्मात्किमथ क्लिष्टकल्पनया सिद्धार्थेपदानां सामर्थ्यमास्थी-यत इत्याशंक्याह (यथाचैतदिति) सिद्धार्थेपदानां सामर्थ्यावधार-णात् यथाकार्य्यसंस्पर्शमन्तरेण ब्रह्मणिवेदांतानां प्रामाण्यं तथेत्यर्थः॥

**तत्र वेदानां नित्यसर्वज्ञपरमेश्वरप्रणीतत्त्वेन प्रामाण्य मितिनैयायिकाः वेदानां नित्यत्वेन निरस्तसमस्त पुंदूषणतया प्रामाण्यमित्यध्वरमीमांसकाः अस्मा कं तु मतेवेदो न नित्य उत्पत्तिमत्वात् उत्पत्तिम त्वंच "अस्यमहतो भूतस्य निःश्वसितमेतद्यदृग्वेद" इत्यादिश्रुतेः। नापि वेदानां त्रिक्षणावस्थायित्वं य एव वेदो देवदत्तेनाधीतः स एव वेदो मयाधीतः इत्यादि प्रत्यभिज्ञाविरोधात् अत एव गकारादिवर्णानामपि न क्षणिकत्वं सोयं गकार इति प्रत्यभिज्ञाविरोधात्॥**

स्वाभिमतवेदप्रामाण्यंदर्शयितुं नैयायिकमीमांसकयोर्मते दर्शयति (तत्रेति) लोकवेदयोर्मध्ये कर्तृदोषादप्रामाण्यप्रसक्तिमाशंक्योक्तं सर्वज्ञेति। सर्वज्ञत्वं मन्वादीनामप्यस्त्यत उक्तं नित्येति प्रणीतत्वा भिधानेन स्वमताद्वैलक्षण्यं बोधितं स्वमतेवेदस्योत्पत्तिमत्त्वेपि वेदः कल्पांतरीयानुपूर्वी विजातीयानुपूर्वीक ईश्वरप्रणीत इत्यनंगीकारात्। (नित्यत्वेनेति) वेदानामनित्यत्वाभ्युपगमे पुंप्रणीतत्वावश्यं भावात्त-स्येश्वरत्वेपि भक्तपक्षपातादि संभवाद्बौद्धप्रणीतागमवद्वेदेपि दोषप्रसंगा-त्तस्यनित्यत्वेन निरस्तसमस्तपुंदूषणतया प्रामाण्यमित्यर्थः। स्वमतमाह।

( अस्माकंत्विति ) तुशब्द उक्तपक्षाभ्यां वैलक्षण्यद्योतनार्थः । तत्त्वं चानित्यत्वेपि प्रलयकालपर्य्यंतावस्थापित्वे सति पुंदोषविनिर्मुक्तत्त्वं तेच्चश्रुतिसिद्धमतो नस्वरूपासिद्धोहेतुरित्याह ( उत्पत्तिमत्त्वंचेति ) ऋचः सामानिजज्ञिरेतस्मादित्यादिश्रुतिरादि पदार्थः वेदोननित्य इत्युक्तेः॥ नैयायिकाभिमतत्रिक्षणावस्थायित्वं वेदानां किंतवाप्यनुमतमित्यपेक्षायां येथामीमांसकाभिमतं तेषां नित्यत्वं यथास्मदननुमतं तथातदभिमतं तथांत्वमपीत्याह ( नापीति ) वर्णसमुदायगर्भस्य वेदस्य स्वरूपतः क्षणिकत्वमपाकृत्य वर्णद्वारापि तन्निराकरोति ( अतएवेति यतः प्रत्यभिज्ञाविरोधाद्वेदानामक्षाणिकत्वमत एवसोयमित्यादि प्रत्यभिज्ञाविरोधाद्वर्णानां न क्षणिकत्वमित्यर्थः ॥

**तथाच वर्णपदवाक्यसमुदायस्य वेदस्य वियदादिवत् सृष्टिकालीनोत्पत्तिमत्त्वं प्रलयकालीनध्वंसप्रतियोगित्वं च नतुमध्ये वर्णानामुत्पत्तिविनाशावनंतगकारकल्पनेगौरवात् अनुच्चारणदशायां वर्णानामनभिव्यक्तिस्तदुच्चारणरूपव्यंजकाभावान्न विरुध्यते अन्धकारस्थले घटानुपलंभवदुत्पन्नो गकार इत्यादि प्रत्ययः सोऽयं गकार इति प्रत्यभिज्ञाविरोधादप्रमाणं वर्णाभिव्यक्तिजनकध्वनिगतोत्पत्तिनिरूपितपरम्परासम्वंधविषयत्वेन प्रमाणंवा । तस्मान्नवेदानां क्षणिकत्वम् ॥**

नन्वेवं तर्हि कथं वेदानामुत्पत्तिमत्वं ततश्चानित्यत्वमित्याशंक्याह ( तथाचेति ) वेदानां स्वरूपतो वर्णद्वाराचक्षणिकत्वाभावे सति नन्वेवं

---

१ उत्पत्तिमत्वंच । २ यादृशम् । ३ वेदानाम् । ४ नैयायिकाभिमतम् । ५ त्रिक्षणावस्थायित्वमपि ।

तर्हि सवदावर्णानामभिव्यक्तिः कुतोनेत्याशंक्याह (अनुच्चारणेति) ननूत्पन्नोगकारो नष्टो गकार इति प्रत्ययान्मध्येऽयुत्पत्यादिकंकथंनास्थीयत इत्याशंक्य परिहरति ( उत्पन्नइति ) वर्णोतिश्यामो घटो नष्टो रक्तो घट उत्पन्न इति प्रतीतिवदुत्पत्तिविनाशवद्ध्वनिसंबंधादुक्तप्रत्ययः परम्परासंबंधविषयत्वात्प्रमाणं वेत्यर्थः । उपसंहरति ( तस्मादिति ) ॥

**ननु क्षणिकत्त्वाभावेपि वियदादिप्रपंचवदुत्पत्तिमत्त्वेन परमेश्वरकर्तृकतया पौरुषेयत्वादपौरुषेयत्वं च वेदानामिति तव सिद्धांतो भज्येतेतिचेन्न नहि तावत्पुरुषेणोच्चार्य्यमाणत्वं पौरुषेयत्वं गुरुमतेपि अध्यापकपरंपरया पौरुषेयत्वापत्तेः नापि पुरुषाधीनोत्पत्तिकत्वं पौरुषेयत्वम् नैयायिकाभिमतपौरुषेयत्वानुमानेऽस्मदादिना सिद्धसाधनत्वापत्तेः किन्तु सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम् ॥**

अथापसिद्धांतं मीमांसकः शंकते ( नन्विति ) अस्माकं मते वेदानामुत्पत्तिमत्त्वेपि पौरुषेयत्वाभावान्नाप सिद्धांत इत्याशयेनाह (नेति) किंविधंपौरुषेयत्वमभिप्रेत्यास्मन्मते तदापाद्यते किं पुरुषेणोच्चार्य्यमाणत्वं किंवा पुरुषाधीनोत्पत्तिकत्वमिति विकल्प्याद्यंनिराकरोति ( नहीति ) मौनिश्लोकादरपौरुषेयत्वापत्तिरपिवोध्या द्वितीयं प्रत्याह ( नापीति ॥ वेदाः पौरुषेयावाक्यत्वाद्भारतादिवदिति नैयायिकाभिमतपौरुषेयत्वानुमानेऽस्मदाद्यभ्युपेतपौरुषेयत्वसाधनादस्मदादिना सिद्धसाधनतापत्तेरित्याह(नैयायिकेति)तर्हि किंविधंपौरुषेयत्वं यदभावाद्भवतां मतउत्पत्तिमतां वेदानामपौरुषेयत्वं सिध्यतीत्याशंक्य परिहरति(किंत्विति)सजातीयोच्चारणस्यानपेक्षायस्य तत् तथातथाविधोच्चारणस्य विषयत्वमित्यर्थः ॥

**तथाच सर्गाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वी**

समानानुपूर्वीकं वेदं विरचितवान् नतु तद्विजातीयं वेदमिति न सजातीयोच्चारणानपेक्षोच्चारणविषयत्वं पौरुषेयत्वं वेदानां भारतादीनां तु सजातीयोच्चारण मनपेक्ष्यैवोच्चारणमिति तेषां पौरुषेयत्वम् । एवं पौरुषेयापौरुषेयभेदेनागमो द्विधा निरूपितः ॥

॥ इति वेदान्तपरिभाषायामागमपरिच्छेदः ॥ ४ ॥

तथाचोक्तविधेपौरुषेयत्वेसति इति उक्तहेतोर्नोक्तपौरुषेयत्वं वेदस्येत्यर्थः । अस्तिचपौरुषेयेष्वेतल्लक्षणमित्याह ( भारतादीनांत्विति ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तविरचितायांवेदान्त परिभाषार्थदीपिकायामागमपरिच्छेदः ॥ ४ ॥

---

## अथार्थापत्तिपरिच्छेदः ५.

इदानीमर्थापत्तिर्निरूप्यते ॥

अथागमनिरूपणानंतरमर्थापत्तिनिरूपणं प्रतिजानीते ( इदानीमिति)

तत्रोपपाद्यज्ञानेनोपपादककल्पनमर्थापत्तिः।तत्रोपपाद्यज्ञानं करणं उपपादकज्ञानं फलं । येन विना यदनुपपन्नं तत्तत्रोपपाद्यं यस्याभावे यस्यानुपपत्तिस्तत्तत्रोपपादकं यथारात्रिभोजनेन विना दिवाऽभुंजानस्य पीनत्वमनुपपन्नमिति तादृशपीनत्वमुपपाद्यं यथावा रात्रिभोजनस्याभावे तादृशपीनत्वस्यानुपपत्तिरिति रात्रिभोजनमुपपादकम् ॥

तत्रार्थापत्तेरागमनिरूपणानंतरनिरूपणविषयत्वे सतिप्रमाकरणस्य प्रमाणत्वात्प्रमारूपार्थापत्तेर्लक्षणमाह (उपपाद्येति) उपपादकज्ञानं करणमुपपाद्यज्ञानं फलमिति भ्रमव्यावृत्त्यर्थमाह ( तत्रेति ) तयोर्ज्ञानद्वयोर्मध्येउपपादकाभावव्यापकाभावप्रतियोगित्वमुपपाद्यत्वमित्युपपाद्यलक्षणमाह ( येनेति तत्रेति ) तेनेत्यर्थः । उपपाद्याभावव्याप्याभावप्रतियोगित्वमित्युपपादकलक्षणमाह ( यस्येति ) तत्रेति तस्येत्यर्थः । उपपाद्योदाहरणमाह ( यथेति ) उपपादकोदाहरणमाह । यथावेति ॥

**रात्रिभोजनकल्पनारूपायां प्रमितावर्थस्यापत्तिः कल्पनेति षष्ठीसमासेन अर्थापत्तिशब्दो वर्तते कल्पनाकरणपीनत्वादिज्ञाने त्वर्थस्यापत्तिः कल्पना यस्मादितिबहुव्रीहिसमासेन वर्तते इतिफलकरणयोरुभयोस्तत्पदप्रयोगः ॥**

प्रमितावर्थापत्तिशब्दप्रवृत्तिनिमितमाह ( रात्रिभोजनेति ) तत्करणे तन्निमित्तमाह ( कल्पनेति ) ॥

**साचार्थापत्तिर्द्विविधा दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेति तत्र दृष्टार्थापत्तिर्यथा इदं रजतमिति पुरोवर्तिनि प्रतिपन्नस्य रजतस्य नेदं रजतमिति तत्रैवनिषिध्यमानत्वं सत्यत्वेऽनुपपन्नमिति रजतस्य सद्भिन्नत्वं सत्यत्वात्यंताभाववत्वं वा मिथ्यात्वं कल्पयतीति, श्रुतार्थापत्तिर्यथा यत्र श्रूयमाणवाक्यस्य स्वार्थानुपपत्तिमुखेनार्थांतरकल्पनं यथा तरति शोकमात्मविदित्यत्र श्रुतस्य शोकशब्दवाच्यबंधजातस्य ज्ञाननिवर्त्यत्वस्याऽन्यथाऽनुपपत्त्या बंधस्य मिथ्यात्वं कल्प्यते ॥**

एवं लक्षणलक्षितां तां विभजते ( साचेति ) अर्थापत्तिनिरूपणस्थ-प्रपंचमिथ्यात्वादिसिद्ध्यर्थत्वात्तदनुरूपमुदाहरणं वक्तव्यमित्याशयेनाह। ( दृष्टार्थापत्तिर्यथेति ) प्रतिपन्नस्य प्रतीतस्य तत्रैवपुरोवर्तिन्येव सत्यत्वे रजतस्येति संबध्यते अनुपपन्नमितिहेतोः निषिध्यमानत्वं रजतस्य मिथ्यात्वं कल्पयति किंतदित्यत आह ( सद्भिन्नत्वमिति ) ॥ ४ ॥

**यथावा जीवीदेवदत्तो गृहे नेति वाक्यश्रवणानंतरं जीविनो गृहासत्त्वं बहिःसत्वं कल्पयति श्रुतार्थापत्तिश्च द्विविधा अभिधानानुपपत्तिरभिहितानुपपत्तिश्च तत्र यत्र वाक्यैकदेशश्रवणेऽन्वयाभिधानानुपपत्त्यान्वयाभिधानोपयोगिपदांतरं कल्प्यते तत्राभिधानानुपपत्तिः यथा द्वारमित्यत्र 'पिधेहि' इत्याध्याहारः यथावा 'विश्वजितायजेत' इत्यत्र 'स्वर्गकाम' पदाध्याहारः। ननु द्वारमित्यादावन्वयाभिधानात्पूर्वमिदमन्वयाभिधानं पिधानोपस्थायकपदं विनाऽनुपपन्नमिति कथं ज्ञानमितिचेन्न अभिधानपदेन करणव्युत्पत्या तात्पर्यस्य विवक्षितत्वात् तथाच द्वारकर्मकपिधानक्रियासंसर्गपरत्वं पिधानोपस्थापकपदं विनाऽनुपपन्नमिति ज्ञानं तत्रापि संभाव्यते ॥**

मीमांसक मतानुसारेणाह। ( यथावेति ) तत्रद्वयोर्मध्ये पदाध्याहारमतमनुसृत्याह ( यथेति ) वैदिकोदाहरणमाह ( यथावेति ) चतुर्थाध्यायस्थे सः स्वर्गःस्यात् सर्वान्प्रत्यवशिष्टत्वादिति सूत्रेस्वर्गकामपदाध्याहारस्य दर्शितत्वादितिभावः। ननु द्वारकर्मकपिधानमित्यन्वयाभिधानात्प्राक्पिधानोपस्थापकं पदंविनाद्वारमित्यन्वयाभिधानं नोपपद्यत इति-

कथं ज्ञानमिति शंकते ( नन्विति ) अत्रभावव्युत्पत्तिर्नाभिप्रेतेति परि-
हरति ( नेति ) अभिधीयतेऽनेनेतिकरणव्युत्पत्त्याभिधानपदेन तात्पर्यस्य
विवक्षितत्वात् । तात्पर्यस्य विवक्षितत्वे सतीदं समाधानंफलितमित्याह ।
( तथाचेति ) द्वारकर्मकक्रियासंसर्गावबोधनतात्पर्येणानेन द्वारमित्युच्च-
रितमितिज्ञानवतोन्वयाभिधानात्पूर्वावस्थायामपितथाज्ञानं संभाव्यत
इत्यर्थः ॥

**अभिहितानुपपत्तिस्तु यत्र वाक्यावगतोर्थोनुपपन्नत्त्वे न ज्ञातः सन्नर्थांतरं कल्पयति तत्र द्रष्टव्या । यथा "स्वर्गकामो ज्योतिष्टोमेन यजेत" इत्यत्र स्वर्गसाध नत्वस्य क्षणिकतया साक्षात् यागगतस्यानुपपत्त्या मध्यवर्त्यपूर्वं कल्प्यते । नचेयमर्थापत्तिरनुमानेन्त र्भवितुमर्हति । अन्वयव्याप्त्यज्ञानेनान्वयिन्यनंतर्भा वात् व्यतिरेकिणश्चानुमानत्वं प्रागेव निरस्तं अत एवार्थापत्तिस्थलेऽनुमिनोमीति नानुव्यवसायः किंतु अनेनेदं कल्पयामीति ॥**

द्वितीयाक्वद्दष्टेत्यपेक्षायामाह ( अभिहितेति ) तत्रापि कुत्रेत्यतआह
( यथास्वर्गकामइति ) नैयायिकमतमाशंक्य परिहरति ( नचेति )
अर्थापत्तेरन्वयिन्यंतर्भावः किंवाव्यतिरेकिणीतिविकल्प्याद्यंप्रत्याह( अन्व-
येति ) द्वितीयं निराचष्टे व्यतिरेकिण इति अनुमिनोमीत्यनुव्यवसाया-
भावोपिव्यतिरेकिणोनुमानत्वेनुपपन्नइत्याह ( अतएवेति ) यतो व्यतिरे-
किणोनुमानता नास्त्यत एव कीदृशस्तस्यानुव्यवसाय इत्याशंक्याह
( किंत्विति ) तथाचार्थापत्तेरावश्यकत्वान्नगौरवमाशंकनीयमितिभावः६।

**नन्वर्थापत्तिस्थले इदमनेन विनाऽनुपपन्नमिति ज्ञानं**

---

१ ज्ञानस्य ।

करणमित्युक्तं तत्र किमिदं तेन विनाऽनुपपन्नत्वं तद्भावव्यापकाभावप्रतियोगित्वमितिब्रूमः । एवमर्थापत्तेर्मानांतरत्वसिद्धौ व्यतिरेकिनानुमानांतरं पृथिवीतरेभ्यो भिद्यते इत्यादौ गंधवत्त्वमितरभेदं विनाऽनुपपन्नमित्यादि ज्ञानस्य करणत्वात् । अत एवानुव्यवसायः पृथिव्यामितरभेदं कल्पयामीति ॥

इति वेदान्तपरिभाषायामर्थापत्तिपरिच्छेदः ॥ ५ ॥

नन्विदमनेन विनानुपपन्नमितिज्ञानं व्यतिरेकव्याप्तिज्ञानमेव उतान्यत्। आद्ये तस्यानुमितिं प्रति क्लृप्तकरणत्वेनानुमानत्वापत्तिः । नद्वितीयस्तस्यनिरूपयितुमशक्यत्वादित्याशयेनाशंकते ( नन्विति ) अस्तुवा- व्यतिरेकव्याप्तिज्ञानमेतत् । तथापि तथाविधानुव्यवसायबलादर्थापत्तिकरणत्वमविरुद्धं तस्यानुमितिकरणत्वं दूषितंचेत्याशयेनाह ( तद्भावेति ) एवमर्थापत्तेरावश्यकत्वाद्व्यतिरेकिणोनुमानत्वं नकल्पनीयमित्याह ( एवमिति ) तर्हि तदुदाहरणेषु कागतिरित्याशंक्य हेतुमाह (पृथिवीति )पृथिवीतरेभ्योभिद्यते गंधवत्वाद्यन्नैवं तन्नैवं यथाजलमित्यादौ अत्राप्यर्थापत्तित्वसाधकोऽनुव्यवसाय इत्याह ( अतएवेति ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तकृतायांवेदांतपरिभाषार्थदीपिकायामर्थापत्तिपरिच्छेदः ॥ ५ ॥

---

१ व्यतिरेकव्याप्तिज्ञानस्य ।

## अथानुपलब्धिपरिच्छेदः ६.

इदानीं षष्ठं प्रमाणं निरूप्यते ॥

अथ क्रमप्राप्तानुपलब्धिप्रमाणनिरूपणं प्रतिजानीते ( इदानीमिति )

ज्ञानकरणाजन्याभावानुभवासाधारणकारणमनुपलब्धिरूपं प्रमाणं अनुमानजन्यातीन्द्रियाभावानुभवहेतावनुमानादावतिव्याप्तिवारणायाजन्यान्तं पदम् । अदृष्टादौसाधारणकारणेऽतिव्याप्तिवारणायासाधारणेति पदम् । अभावस्मृत्यसाधारणहेतुसंस्कारेऽतिव्याप्तिवारणायानुभवेतिविशेषणम् । नचातीन्द्रियाभावानुमितिस्थलेप्यनुपलब्ध्यैवाभावो गृह्यतां विशेषाभावादिति वाच्यम् । धर्माधर्माद्यनुपलब्धिसत्वेपि तदभावानिश्चयेन योग्यानुपलब्धेरेवाभावग्राहकत्वात् ॥

तल्लक्षणमाह ( ज्ञानेति ) अजन्यांतं ज्ञानकरणाजन्येतिपदं भावानुभवकरणे चक्षुरादावतिव्याप्तिवारणायाभावपदमित्यभिप्रेत्यासाधारणपदव्यावर्त्यमाह ( अदृष्टादाविति ) ननु ज्ञानपदं विहायानुभवपदप्रदाने किंफलमित्याशंक्याह ( अभावेति ) अजन्यांतस्य वैयर्थ्यमाशंक्य परिहरति ( नचेति ) अभावग्राहकयोग्यानुपलब्धेरभावानुमितिस्थलेऽभावादित्याह ( धर्मेति ) ॥

ननु केयं योग्यानुपलब्धिः किंयोग्यस्य प्रतियोगिनोऽनुपलब्धिरुत योग्याधिकरणे प्रतियोग्यनुपलब्धिः । नाद्यः, स्तंभे पिशाचादिभेदस्याप्रत्यक्षत्वा

पत्तेः । नांत्यः, आत्मनिधर्माधर्म्माद्यभावस्यापि प्रत्यक्षतापत्तेरिति चेन्न योग्याचासावनुपलब्धिश्चेति कर्मधारयाश्रयणात् । अनुपलब्धेर्योग्यताच तर्कित प्रतियोगिसत्वप्रसंजितप्रतियोगिकत्वं यस्याभावो गृह्यते तस्य यः प्रतियोगी तस्य सत्वेनाधिकरणे तर्कितेन प्रसंजनयोग्यमापादनयोग्यंयत्प्रतियोग्युप लब्धिस्वरूपं यस्यानुपलंभस्य तदनुपलब्धेर्योग्यत्व मित्यर्थः ॥

षष्ठीसप्तमीसमासयोः संभवादुभयत्रचदोषसद्भावाच्छंकते ( नन्विति ) कर्मधारयसमासमाश्रित्य परिहरति ( योग्येति ) अनुपलब्धियोग्यत्वं किमित्यपेक्षायामाह ( अनुपलब्धेरिति ) यद्यत्रघटः स्यादिति तर्किते न प्रतियोगिसत्वेन तर्ह्युपलभ्येतेति प्रसंजितः घटोपलंभलक्षणः प्रति-योगीयस्यानुपलंभस्य तस्य भावस्तत्त्वमित्यभिप्रेत्यैतदर्थमाह यस्येति ॥

तथाहि स्फीतालोकवति भूतले यदि घटः स्यात्तदा घटोपलंभः स्यादित्यापादनसंभवात्तादृशभूतले घटा भावोऽनुपलब्धिगम्यः । अंधकारेतु तादृशापादनासं भवान्नानुपलब्धिगम्यता अत एव स्तंभे पिशाचसत्वे स्तंभवत्प्रत्यक्षतापत्त्या तदभावोनुपलब्धिगम्यः आत्मनि धर्मादिसत्त्वेप्यस्यातीन्द्रियतयानिरुक्तोप लंभापादनासंभवात् न धर्माद्यभावस्यानुपलब्धिग म्यत्वम् ॥

अथोदाहरणप्रत्युदाहरणाभ्यामुक्तं स्फुटयति ( तथाहीति ) स्फीतो

विशालः पक्षद्वयोक्तदोषाभावमाह ( अतएवेति ) यत एवं भूतयोग्यानुपलब्धिसमाश्रयणमत एवेत्यर्थः ॥

ननूक्तरीत्याधिकरणेन्द्रियसन्निकर्षस्थले अभावस्यानुपलब्धिगम्यत्वमनुमतं तत्र क्लृप्तेन्द्रियमेवाभावाकारवृत्तावपिकरणं इन्द्रियान्वयव्यतिरेकानुविधानादितिचेन्न तत्प्रतियोग्यनुपलब्धेरपि अभावग्रहे हेतुत्वेन क्लृप्तत्वेन करणत्वमात्रस्य कल्पनात् इन्द्रियस्यचाभावेन समं सन्निकर्षाभावेनाभावग्रहाहेतुत्वात् इन्द्रियान्वयव्यतिरेकयोरधिकरणज्ञानाद्युपक्षीणत्वेनान्यथासिद्धेः ॥

नैयायिकः शंकते ( नन्विति) तत्र तादृशस्थले क्लृप्तसंभवेऽपूर्वकल्पनमन्याय्यं गौरवादित्यर्थः। इन्द्रियसत्त्वेऽभावज्ञानतदभावे तदभाव इत्यन्वयव्यतिरेकयोरनुविधानादनुरोधात् नास्तिममगौरवं प्रत्युततवैवमहद्गौरवमित्याशयेन समाधत्ते ( नेति ) संयुक्तविशेषणतासंबंधस्यानंगीकारात्प्रमाणशून्यत्वाच्चेत्याभिप्रेत्याह ( इन्द्रियस्येति ) ननु सन्निकर्षाभावप्रयुक्तहेतुत्वाभावोऽसिद्ध इन्द्रियान्वयव्यतिरेकवलेन तस्यकल्प्यत्वादित्याशंक्याह ( इन्द्रियेति )अन्यथासिद्धे सन्निकर्षादिविनैवसार्थक्यात्। आदिपदेन प्रतियोगिज्ञानसंग्रहः अभावेन समं सन्निकर्षभावेऽयंहेतुः ॥

ननु भूतले घटो नेत्याद्यभावानुभवस्थले भूतलांशे प्रत्यक्षत्वमुभयसिद्धमिति तत्र वृत्तिनिर्गमनस्यावश्यकत्वेन भूतलावच्छिन्नचैतन्यवत्तन्निष्ठघटाभावावच्छिन्नचैतन्यस्यापि प्रमात्रभिन्नतया घटाभावस्य

---

१ अन्यथा सिद्धेरितिहेतुः।

प्रत्यक्षतैव सिद्धांतेपीतिचेत् सत्यं अभावप्रतीतेः प्रत्यक्षत्वेपि तत्करणस्यानुपलब्धेर्मानांतरत्त्वात् नहि फलीभूतज्ञानस्य प्रत्यक्षत्वे तत्करणस्य प्रत्यक्ष प्रमाणतानियतत्वमस्ति दशमस्त्वमसीत्यादिवाक्य जन्यज्ञानस्य प्रत्यक्षत्वेपि तत्करणस्य वाक्यस्य प्रत्यक्षप्रमाणभिन्नप्रमाणत्वाभ्युपगमात् ॥

ननु भवत्सिद्धांतेप्यभावप्रमायाःप्रत्यक्षतैवसमायात्यतः कथं तत्करणा नुपलब्धिरिति शंकते ( नन्विति ) आदिपदेन स्तंभे पिशाचोनेत्यादि-संग्रहः । तत्र तादृशेस्थले तन्निष्ठभूतलनिष्ठ अर्द्धांगीकारेण परिहरति ( सत्यमिति ) यद्यप्यभावस्य प्रत्यक्षत्वयोग्यत्वाभावाच्छब्दजन्यस्वनिष्ठ-धर्मादिज्ञानवन्नाभावज्ञानस्य प्रत्यक्षत्वं प्रत्यक्षलक्षणेयोग्यत्वस्यापि विषय-विशेषणत्वेनोक्तत्वात् । तथाप्यभावज्ञानप्रत्यक्षाप्रत्यक्षत्वयोर्नतद्योग्यायो-ग्यत्वेतंत्रेकिंतुप्रतियोनुपलब्धियोग्यायोग्यत्वेतथाचानुपदमेवास्यार्थस्य-स्पष्टीकृतत्वात् । अभावज्ञानप्रत्यक्षत्वेनाभ्युपेत्यैवाद आश्रयणीयाः[1]। ननु तस्याः[2] प्रत्यक्षत्वे कथं तत्करणस्य मानांतरत्वमितित त्राह ( नहीति ) ॥

फलवैजात्यं विना कथं प्रमाणभेद इतिचेन्न वृत्तिवै जात्यमात्रेण प्रमाणवैजात्योपपत्तेः तथाच घटाद्यभा वाकारवृत्तिर्नेन्द्रियजन्या इन्द्रियस्य विषयेणासन्निक र्षात् किन्तु घटानुपलब्धिरूपमानांतरजन्या इति भ वत्यनुपलब्धेर्मानांतरत्वं नन्वनुपलब्धिरूपमानांतर पक्षेप्यभावप्रतीतेः प्रत्यक्षत्वे घटवति घटाभावभ्रम स्यापि प्रत्यक्षत्वापत्तौ तत्राप्यनिर्वचनीयघटाभावोऽ

१ अभावस्यप्रत्यक्षत्वयोगित्वमंगीकृत्याभावज्ञानप्रत्यक्षत्ववादः। २अभावप्रतीतेः ।

भ्युपगम्येतनचेष्टापत्तिः तस्य मायोपादानकत्वेऽभा वत्वानुपपत्तेः मायोपादानकत्वाभावे मायायाः सकलकार्योपादानत्वानुपपत्तिरितिचेन्न घटवति घटाभावभ्रमो न तत्कालोत्पन्नघटाभावविषयकः किन्तु भूतलरूपादौ विद्यमानो लौकिको घटाभावो भूतले आरोप्यत इत्यन्यथाख्यातिरेवारोप्यसन्निकर्षस्थले सर्वत्रान्यथाख्यातेरेव व्यवस्थापनात् ॥

ननु प्रमाणभेदस्यफलभेदायतत्त्वात्कथंतं विना तस्य सिद्धिरित्याशंकते-( फलेति ) प्रत्यक्षत्त्वेन फलस्यसाजात्येपिभूतलाकारवृत्तेरिन्द्रियजन्यत्वादभावाकारवृत्तेस्तदजन्यत्वाद्वृत्तिवैजात्यमात्रेण तदुपपत्तेर्मैवमित्याह ( नेति)फलितमाह(तथाचेति)वृत्तिवैजात्यमात्रेण प्रमाणवैजात्येअथाभावभ्रमेदोषमाशंकते ( नन्विति ) तत्रानिर्वचनीयघटाभावो नाभ्युपगम्यतेऽतोनोक्तदोष इत्याह ( नेति ) नन्वेवं तर्हि कथं घटाभावभ्रमस्य प्रत्यक्षत्वमित्याशंकते ( किंत्विति ) तद्विषयस्य सन्निहितत्त्वेन तत्संभवान्मैवमित्याह ( भूतलेति ) आदिपदेन क्रियादिसंग्रहः अपसिद्धांतमाशंक्याह ( आरोप्येति ) ॥

अस्तु वा प्रतियोगिमति तदभावभ्रमस्थले तदभावस्यानिर्वचनीयत्वम् तथापि तदुपादानं मायैव नह्युपादानोपादेययोरत्यंतसाजात्यं तन्तुपटयोरपि तंतुत्वपटत्वादिना वैजात्यात् यत्किंचित्साजात्यस्य मायाया अनिर्वचनीयस्य घटाभावस्यच मिथ्यात्वधर्मस्य विद्यमानत्वात् अन्यथा व्यावहारिकघटाद्यभावं प्रति कथं मायोपादानमिति कुतो

अभावमति

नाशंकेधाः नच विजातीययोरप्युपादानोपादेयभावे ब्रह्मैव जगदुपादानं स्यादितिवाच्यम् । प्रपंचविभ्रमाधिष्ठानत्वरूपेण तस्येष्टत्वात् । परिणामित्वरूपस्योपादानत्वस्य निरवयवे ब्रह्मण्यनुपपत्तेः । तथाच प्रपंचस्य परिणाम्युपादानं माया न ब्रह्म इति सिद्धांत इत्यलमतिप्रसंगेन ॥

ननु घटाधिकरणभूतलरूपादिनिष्ठघटाभावादेरिन्द्रियासन्निकृष्टत्वात्कथं तद्गतअभावोत्रारोप्यत इत्याशंक्यानिर्वचनीयत्वमंगीकृत्य समाधत्ते ( अस्तुवेति ) प्रोक्तदूषणमुद्धरति (नहीति) ननु तयोः सर्वाकारेणसाजात्याभावेपि यत्किंचित्साजात्यमवश्यमभ्युपेयम्।अन्यथोपादानोपादेयत्व व्याघातादित्याशंक्याह (यत्किंचिदिति) अन्यथा–अभावस्य मायोपादानासंभवे, नन्वेवं ब्रह्मण एव जगदुपादानत्वसंभवात्किमर्थं मायाकल्प्यत इत्याशंक्य परिहरति ( नचेति ) किं ब्रह्मणो जगदुपादानत्वमनिष्टमापाद्यते किंवा मायावैयर्थ्यमितिविकल्प्याद्यं प्रत्याह ( प्रपंचेति ) द्वितीयं प्रत्याह ( परिणामित्वरूपस्येति) तथाच निरवयवे ब्रह्मणि परिणामस्यानुपपन्नत्वे ॥

सचाभावश्चतुर्विधः प्रागभावः प्रध्वंसाभावोऽत्यन्ताभावोऽन्योन्याभावश्चेति। तत्र मृत्पिंडादौकारणेकार्यस्य घटादेरुत्पत्तेः पूर्वयोभावः सप्रागभावः सच भविष्यतीतिप्रतीतिविषयः तत्रैवघटस्य मुद्गरपातानंतरं योभावःस प्रध्वंसाभावः ध्वंसस्यापि स्वाधिकरणकपालनाशेनाश एव। नचैवं घटोन्मज्जनापत्तिघटध्वंसध्वंसस्यापि घटप्रतियोगिकध्वंसत्वात् । अन्यथा प्रागभावध्वंसात्मकघटस्य विनाशे प्रागभावोन्मज्जनापत्तिः॥

प्रासंगिकं समाप्यानुपलब्धिप्रमाणविषयमभावं विभजते ( सचेति ) तत्रतेषु कार्यसमवायिकालान्यावृत्तित्वे सति कार्योत्पत्तिपूर्वकालीनत्वं प्रागभावलक्षणमभिप्रेत्याह ( मृत्पिंडेति ) तद्विषयकप्रत्ययस्वरूपमाह ( सचेति ) प्रागभावः घटो भविष्यतीति प्रत्ययः घटप्रागभावं विषयीकरोति । द्वितीयं लक्षयति (तत्रैवेति ) तत्र मृत्पिंडादौकार्यसमवायिकालान्यावृत्तिप्रतियोग्यजनकः ध्वंसाभावः सचविनष्ट इति प्रत्ययगोचर इत्यपिज्ञेयम् । तस्यांतवत्त्वं तार्किकमतनिरासायाह ( ध्वंसस्यापीति ) नाशकाभावमाशंक्याह ( स्वेति ) ननु प्रागभावध्वंसानाधारकालस्य प्रतियोगिकालतानियमात् घटोन्मज्जनप्रसंग इत्याशंक्य परिहरति ( न चेति ) तत्र हेतुमाह ( घटध्वंसेति ) घटध्वंसकालस्य घटकालत्वाभाववत्तत्प्रतियोगिकध्वंसकालस्यापि तथात्वादित्यर्थः । ननु ध्वंसजनकस्य तत्प्रतियोगित्वनियमात्कथमजनकस्य घटस्य तत्प्रतियोगित्वमित्याशंक्य घटध्वंसध्वंसेपि नष्टोघट इति प्रतीतिसद्भावात् । घटध्वंसध्वंसस्यापि घटजन्यत्वोपचारात्तत्प्रतियोगिकत्वमास्थेयमन्यथातिप्रसंग इत्याह ( अन्यथेति ) उक्तानंगीकारेण घटोन्मज्जनापत्तौ ॥

**नचैवमपि यत्र ध्वंसाधिकरणं नित्यं तत्र कथं ध्वंस नाश इति वाच्यम् । तादृशाधिकरणं यदि चैतन्यव्यतिरिक्तं तदा तस्य नित्यत्वमसिद्धम्,ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मज्ञाननिवर्त्यताया वक्ष्यमाणत्वात् । यदिच ध्वंसाधिकरणं चैतन्यं तदाऽसिद्धिः, आरोपित प्रतियोगिकध्वंसस्याधिष्ठाने प्रतीयमानस्याधिष्ठान मात्रत्वात् तदुक्तम्–"अधिष्ठानावशेषोहि नाशः कल्पितवस्तुनः" इति ॥ १० ॥**

ननु सर्वस्यापिध्वंसस्यानित्यत्वमुतयस्यकस्यचित् । नाद्यः, नित्याधिकरणस्य नाशासिद्ध्यातद्वृतिध्वंसस्यानित्यत्वासिद्धेः।नद्वितीयः, नित्याधि

करणकध्वंससामान्यात्सर्वस्यापि नित्यत्वाश्रयणौचित्यादित्याशंक्य परिहरति ( नचेति ) तन्नित्याधिकरणमाकाशादि किं वा चैतन्यमिति विकल्प्याद्यं प्रत्याह ( तादृशेति ) द्वितीयेपि किमनारोपितं वस्तुप्रति योगि किंवारोपितम्।नाद्यः,नेहनानास्ति किंचनेत्यादिश्रुत्या प्रतीयमान निषेधाभिधानेनसर्वस्यानारोपितत्वाभावाभिधानात्। द्वितीये तादृशध्वंस स्याधिकरणमात्रत्वान्नतवेष्टसिद्धिरित्याशयेनाह ( यदीति ) आसिद्धिःध्वं-सस्य चैतन्यातिरेकेण नित्यत्वासिद्धिः तत्र सुरेश्वराचार्य्यसंमतिमाह ( तदुक्तमिति ) ॥

**एवं शुक्तिरूप्यविनाशोपीदमवच्छिन्नचैतन्यमेव यत्रा धिकरणे यस्य कालत्रयेप्यभावः सोऽत्यंताभावः। यथा वायौ रूपात्यंताभावः सोपि घटादिवत् ध्वंसप्र तियोग्येव। इदमिदंनेति प्रतीतिविषयोऽन्योन्याभावः, अयमेव विभागो भेदः पृथक्त्वंचेति व्यवह्रियते, भेदातिरिक्तविभागादौ प्रमाणाभावात्। अयंचान्यो न्याभावोऽधिकरणस्य सादित्वे सादिः।यथा घटे पट भेदः।अधिकरणस्यानादित्वेनादिरेव,यथा जीवे ब्रह्म भेदः ब्रह्मणि वा जीवभेदः।द्विविधोपि भेदो ध्वंसप्रति योग्येव अविद्याया निवृत्तौ तत्परतंत्राणां निवृत्त्य वश्यं भावात् ॥**

उक्तन्यायं शुक्तिरूप्यनाशेऽतिदिशति ( एवमिति ) तथाचाधिष्ठान चैतन्यातिरिक्तध्वंसाभ्युपगमे प्रमाणाभावाद्गौरवाच्च तदसिद्ध्यासुतरांत-न्नित्यत्वासिद्धिरितिभावः। तृतीयं लक्षयति ( यत्रेति) असंदिग्धमुदाह-रणमाह ( यथेति ) तार्किकमतनिरासायाह ( सोपीति अत्रेदं नेति-प्रत्ययविषय इत्यर्थः। चतुर्थं लक्षयति ( इदमिति ) तादात्म्यसंस-

र्गावच्छिन्नप्रतियोगिताक इत्यर्थः। विभागपृथक्त्वयोः पदार्थांतरत्व-निरासायाह ( अयमिति ) एतस्य सादित्वमनादित्वंच व्यवस्थयाह ( अयंचेति ) ब्रह्मवन्निवृत्त्यभावमाशंक्याह ( द्विविधोपीति ) अनादित्वे-प्याविद्यकत्वादित्याह ( अविद्येति ॥

पुनरपिभेदोद्विविधः, सोपाधिकोनिरुपाधिकश्चेति । तत्रोपाधिसत्ताव्याप्यसत्ताकत्वंसोपाधिकत्वं तच्छून्यत्वंनिरुपाधिकत्वम्। तत्राद्योयथा एकस्यैवाकाशस्य घटाद्युपाधिभेदेन भेदः । यथावा एकस्यसूर्यस्य जलभाजनभेदेनभेदः । तथाच एकस्यैवब्रह्मणोऽन्तः करणभेदाद्भेदः। निरुपाधिकभेदो यथा घटेपटभेदः। नचब्रह्मण्यपि प्रपंचभेदाभ्युपगमेऽद्वैतविरोधः तात्विकभेदादेरनभ्युपगमेनवियदादिवदद्वैताव्याघातकत्वात्।

प्रकारांतरेणान्योन्याभावं विभजते ( पुनरिति ) उपाधिसत्ताया व्याप्यासत्ता यस्यभेदस्य तस्य भावस्तत्त्वं यत्र यत्राकाशादिभेदसत्ता तत्र घटाद्युपाधिसत्तेतिभेदोपाधिसत्तयोर्व्याप्यव्यापकभावः। ननु ब्रह्मणोजड-त्वव्यावृत्तये तत्र प्रपंचप्रतियोगिको भेदोऽभ्युपेयस्तथात्वेचाद्वैतविरोध इत्याशंक्याह ( नचेति ) यथाविपदादिकमतात्विकत्वान्नाद्वैतविघातकं तद्वद्भेदोपीत्याह ( तात्विकेति ) ॥ १२ ॥

प्रपंचस्याद्वैते ब्रह्मणिकल्पितत्वाङ्गीकारात्। तदुक्तं सुरेश्वराचार्यैः-

अक्षमा भवतः केयं साधकत्वप्रकल्पने ॥
किन्नपश्यसि संसारं तत्रैवाज्ञानकल्पितम् ॥

**अत एव विवरणेऽविद्यानुमाने प्रागभावव्यतिरिक्तविशेषणं तत्त्वप्रदीपिकायामविद्यालक्षणे भावत्वविशेषणंच संगच्छते। एवं चतुर्विधाभावानां योग्यानुपलब्ध्याप्रतीतिः तत्रानुपलब्धिर्मानांतरम् ॥**

ननु वियदादिप्रपंचस्यैव तात्त्विकत्वेन तथात्वं कथमित्यतआह (प्रपंचस्येति) प्रपंचस्य ब्रह्मणि कल्पितत्वांगीकारे वार्तिककारसम्मतिमाह (तदुक्तमिति) नन्वभावस्य चातुर्विध्यवर्णनं सिद्धांताननुरोधिनृसिंहाश्रमैरद्वैतदीपिकायां तस्यनिराकृतत्वादित्याशंक्य प्राचीनैर्व्यवहृतत्वात्तत्प्रतिपादनं नसर्वथासिद्धांतविरुद्धमित्याशयेनाह (अतएवेति) यतोऽभावस्य चातुर्विध्यमत एवेत्यर्थः। तथाचानुमानं विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वंतरपूर्वकं भवितुमर्हति, अप्रकाशितार्थप्रकाशकत्वात्, अंधकारे प्रथमोत्पन्नप्रदीपप्रभावदिति। वस्तुपूर्वकमित्युक्तावात्मवस्तुपूर्वकतयार्थांतरत्वं तदर्थं वस्त्वन्तरेति चक्षुरादि व्यावृत्त्यर्थं स्वदेशगतेति। अदृष्टादिकव्यावर्तनाय स्वनिवर्त्येति। उत्तरज्ञाननिवर्त्यपूर्वज्ञानव्यावृत्त्यर्थं स्वविषयावरणेति प्रागभावव्यावृत्त्यर्थं स्वप्रागभावेति। तत्त्वप्रदीपिकायां चित्सुखाचार्यकृतायां अविद्यालक्षणे अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वमविद्यात्वमित्येवंरूपे उपसंहरति (एवमिति) ननु किमनुपलब्धेरभावप्रमायां करणांतरानुपपत्त्यामानांतरत्वमास्थीयते। अनुभवबलाद्वा। नाद्यः क्लृप्तप्रमाणभावस्येन्द्रियस्यैव तत्करणत्वसंभवान्नचेन्द्रियाभावयोः संबंधानिरूपणं संयुक्तविशेषणता संबंधस्यैव सत्त्वात्। नचात्र प्रमाणाभावः,भूतले घटाभाव इत्याधाराधेयभावसंबंधप्रतीतेः। घटाभावज्ञानं संबंधविषयकं विशिष्टज्ञानत्वाद्दंडीपुरुष इतिज्ञानवदित्यनुमानाच्च। अन्यथाभावस्य निराधिकरणत्वापत्तौ ध्वंसस्य स्वाधिकरणकपालनाशेनेत्यादिवर्णनम् अधिकरणस्य सादित्व इत्यादिनाभेदस्य द्वैविध्यनिरूपणंच विरुध्येत। स संबंधः स्वरूपसंबंधोऽन्यो-

वेत्यन्यदेतत् । नचाद्वितीयः, निर्घटभूतलं पश्यामीति विपरीतानुव्यवसायादन्यथापर्वतं पश्यामि वह्निमनुमिनोमीतिवद्भूतलाभावयोर्विलक्षणानुव्यवसायापत्तिः किंचप्रत्यक्षप्रमायां प्रत्यक्षप्रमाणं करणमित्युत्सर्गःस चबलवताबाधकेनापोद्यते। प्रकृतेचाभावज्ञानं प्रत्यक्षमेवेत्युभयसिद्धम् ।तत्र प्रत्यक्षप्रमाणमिन्द्रियमेव करणं बाधकाभावादिन्द्रियाभावयोः संबंधस्य चसाधितत्वात्ततश्चकथमनुपलब्धिर्मानांतरमिति चेदुच्यते । न तावदिंद्रियं तत्करणं संबंधानिरूपणात् । नच संयोगादिस्तस्यासंभवात् । नच संयुक्तविशेषणता तत्रप्रमाणाभावादुक्तप्रतीतेरनुमानस्य चाधाराधेयभावसंबंधसाधकतया इन्द्रियाभावसंबंधासाधकत्वान्नचोक्तमूलविरोधस्तादृशसंबंधभावकथनस्याधाराधेयभावसंबंधकथनपरेण ग्रंथेन विरोधाभावात्।नाप्यनुव्यवसायविरोधः, फलीभूतं ज्ञानं प्रत्यक्षमित्युक्तत्वात्। यदपि किंचेत्यादि तदपि न सन्निकर्षाभावस्य प्रबलतरबाधकस्य सत्त्वात्। किंच किमभावस्य विशेषणता मात्रं सन्निकर्ष इन्द्रियसन्निकृष्टाधिकरणविशेषणता वा किंवायत्राधिकरणे प्रतियोगिसत्त्वमनुपलब्धिविरोधिस्यात्तद्विशेषणता।नाद्यः, भित्त्यादिव्यवहितभूतलादिवृत्तिघटाद्यभावेपि विशेषणतामात्रस्य विद्यमानत्वेन प्रत्यक्षतापत्तेः । नद्वितीयः, परमते करणवलयावच्छिन्ननभस एवश्रोत्रेंद्रियत्वात्तस्यैव स्वग्राह्यशब्दाभावाधिकरणत्वात्स्वेन स्वस्यासन्निकर्षादधिकरणेन्द्रियसन्निकर्षाभावेनशब्दाभावस्याप्रत्यक्षत्वप्रसंगात् । तृतीयेपि, अनुपलब्धिविरोधित्वमुपलभ्यमानत्वं तस्य किंयदाकदाचिद्भावोपेक्षित उतनियमेन आद्ये व्यवहितेप्यभावाधिकरणे कदाचिदुपलंभसंभवात्प्रतियोगिनस्तद्व्यवधानसमयेप्यभावप्रत्यक्षः स्यात् । नद्वितीयः, श्रोत्रदेशे भूतलादौ वा शब्दस्य घटादेर्वासत्त्वेपि सामग्र्यभावादिनानुपलंभसंभवेन नियमेन तदुपलंभायोगात्तत्र तदभावस्याप्रत्यक्षतापत्तेरित्यन्यत्र विस्तरः ॥

**एवमुक्तानां प्रमाणानां प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते च । तथाहि स्मृत्यनुभवसाधारणं संवादिप्र**

वृत्यनुकूलं तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यं, तच्च ज्ञानसामान्यसामग्रीप्रयोज्यं नत्वधिकं गुणमपेक्षते प्रमामात्रे ऽनुगतगुणाभावात् । नापि प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षः;रूपादि प्रत्यक्षे आत्मप्रत्यक्षेच तदभावात् ।सत्यपि तस्मिन् पीतःशंख इति प्रत्ययस्य भ्रमत्वाच्च ॥

एवमुक्तानांप्रमाणानां कीदृशं प्रामाण्यमित्यपेक्षायामाह ( एवमिति ) ननु परतस्त्वप्रामाण्यवादिनितार्किके जाग्रति कथमेवंवक्तुं शक्यमित्यत आह ( तथाहीति ) इच्छावृत्तिप्रामाण्यातिप्रसंगवारणाय ज्ञानत्वमिति भ्रमेतन्निरासाय तद्वतीतिस्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं प्रामाण्यम् । तद्वतितत्प्रकारकज्ञानत्वमित्यर्थः । नन्वेवंभूतेप्रामाण्ये किंस्वतस्त्वं नतावत्स्वोत्पाद्यत्वमात्माश्रयादित्यत आह ( तच्चेति ) ज्ञानजनकसामान्यसामग्र्यतिरिक्तकारणप्रयोज्यत्वं परतस्त्वंनैयायिकाद्यभिमतं निषेधति(नत्विति)प्रमामात्रेनुगतगुणसत्त्वे प्रमाणाभावादित्याह(प्रमामात्रइति) ननुप्रमामात्र इत्युक्तमयुक्तं प्रत्यक्षप्रमायांगुणस्यसत्त्वादित्याशंकानिरासायाह ( नापीति ) उक्तगुणस्यानुगतत्वाभावादित्याह (रूपादीति) व्यतिरेकव्यभिचारमुक्त्वान्वयव्यभिचारमाह ( सत्यपीति ) ॥

अत एव न सल्लिंगपरामर्शादिकमप्यनुमित्यादिप्रमायां गुणः असल्लिंगपरामर्शादिस्थलेपि विषयाबाधे नानुमित्यादेःप्रमात्वात्। नचैवमप्रमापि प्रमा स्यात्, ज्ञानसामान्यसामग्र्या अविशेषादिति वाच्यम्, दोषाभावस्यापि हेतुत्वांगीकारात् । नचैवं परतस्त्वमिति वाच्यम् । आगंतुकभावकारणापेक्षायामेव परतस्त्वात् ॥

अतएवान्वयव्यतिरेकव्यभिचारादेवआदिपदंयोग्यतादिसंग्रहार्थम्। सत्यपिसल्लिंगपरामर्शेगन्धप्रागभावावच्छेदेन गंधानुमितेरप्रमात्वादन्वयव्यभिचारं मनसिनिधाय व्यतिरेकव्यभिचारं दर्शयति ( असल्लिंगेति ) ननु भ्रमस्यापि तादृशसामग्रीप्रयोज्यत्वाविशेषाद्भ्रमप्रमाण्यवस्थापकं किमित्याशंक्य निरासायाह ( नचेति ) प्रतिबंधकाभावस्य कार्यमात्रं प्रतिहेतुत्वेन क्लृप्ततयादोषाभावस्यापि तथात्वेनांगीकारात्।नचायं गुणत्वेन हेतुः, प्रमाणाभावादित्यर्थः। अथसिद्धांतापत्तिमाशंक्य निरासायाह ( नचेति ) अदृष्टादिसापेक्षत्वादागंतुकेति दोषाभावसापेक्षत्वादाह ( भावेति ) तथाचागंतुकभावकारणानपेक्षज्ञानसामान्यसामग्रीप्रयोज्यत्वं स्वतस्त्वमित्यंगीकारेण तादृशकारणसहकृतज्ञानसामान्यप्रयोज्यत्वरूपपरतस्त्वापातोनास्तीतिभावः ॥

**ज्ञायतेच प्रामाण्यं स्वतः स्वतोग्राह्यत्वं च दोषाभावे सति यावत्स्वाश्रयग्राहकसामग्रीग्राह्यत्वं स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यं गृह्यते।नचैवं प्रामाण्यसंशयानुपपत्तिः;तत्र संशयानुरोधेन दोषस्यापि सत्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्यैवाग्रहात् ॥**

अनुसरणेन

एवं प्रामाण्योत्पत्तौ स्वतस्त्वमभिधायतस्यज्ञप्तौ तदावेदयति ( ज्ञायतेचेति) तद्वतितत्प्रकारकज्ञानत्वलक्षणप्रामाण्यमुत्पन्नम्। सज्ञायतेचस्वतइत्यर्थः। ज्ञायतइत्यस्य गृह्यत इत्यर्थमभिप्रेत्याह ( स्वतोग्राह्यत्वंचेति ) परतस्त्ववादिनाऽनुमानादिकं तद्ग्राहकमंगीकृतमतस्तद्वारणाययावदिति स्वाश्रयग्राहकविशेषणं यावत्स्वाश्रयग्राहकसामग्रीजन्यग्रहणगोचरत्वं तैर्नांगीक्रियत इत्यर्थः। दोषवशादप्रामाण्यनिश्चयेसंशयेचसत्यव्याप्तिवारणायदोषाभावेसतीति तथाचदोषवशात्तादृशसामग्र्यातद्ग्रहेपिनदोष

इतिभावः । स्वाश्रयेत्याद्युपपादयति ( स्वाश्रयइति ) तेनापिनत्वनुमाने-नैव सत्यंतपदकृत्यमाशंक्यदर्शयति ( नचेति ) ॥

यद्वा यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वं संशयस्थले प्रामाण्यस्योक्तयोग्यतासत्वेपि दोषवशे नाग्रहात् न संशयानुपपत्तिः । अप्रामाण्यं तु न ज्ञानसामान्यसामग्रीप्रयोज्यं, प्रमायामप्यप्रामाण्याप त्तेः । किन्तु दोषप्रयोज्यम् । नाप्याप्रामाण्यं याव त्स्वाश्रयग्राहकग्राह्यं अप्रामाण्यघटकतदभाववत्त्वा देर्वृत्तिज्ञानाऽनुपनीतत्वेन साक्षिणाग्रहीतुमशक्यत्वा त् । किंतु विसंवादिप्रवृत्त्यादिलिंगिकानुमित्यादि विषय इति परत एवाप्रामाण्यमुत्पद्यते ज्ञायतेचेति॥

॥ इत्यनुपलब्धिपरिच्छेदः ॥ ६ ॥

सत्यंतमप्रदायापिदोषंपरिहरति ( यद्वेति ) एवमुत्पत्तिज्ञप्त्योःप्रामाण्यस्यस्वतस्त्वमुपपाद्य तदप्रामाण्यस्यपरतस्त्वं वर्णयति ( अप्रमाण्यमिति ( विसंवादीति ) इयंशुक्तिरजतार्थिवृत्तिःप्रामाण्यशून्याविसंवादि-प्रवृत्तिजनकत्वादित्यादिविसंवादिप्रवृत्त्यादिलिंगिकानुमितिग्राह्यम् । आ-दिपदेनानाप्तवचनजन्यत्वादिसंग्रहः । द्वितीयादिपदं शाब्दज्ञानादिसं-ग्रहार्थम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यश्रीपादशिष्यदत्तवंशावतंसरामकु-मारसूनुधनपतिसूरिविरिचितायांवेदान्तपारिभाषार्थदी-पिकायामनुपलब्धिपरिच्छेदः ॥ ६ ॥

## अथ विषयपरिच्छेदः ७.



एवं निरूपितानां प्रमाणानां प्रमाण्यं द्विविधम्, व्यावहारिकतत्त्वावेदकत्वं पारमार्थिकतत्त्वावेदकत्वं चेति । तत्र ब्रह्मस्वरूपावगाहिप्रमाणव्यतिरिक्तानां सर्वप्रमाणानामाद्यं प्रामाण्यं तद्विषयाणां व्यवहारदशायां बाधाभावात् । द्वितीयं तु जीवब्रह्मैक्यपराणां "सदेवसोम्येदमग्र आसीत्" इत्यादीनां 'तत्त्वमसि' इत्यंतानां तद्विषयस्य जीवपरैक्यस्य कालत्रयाबाध्यत्वात् ॥

अथ प्रमेयं निरूपयितुमुपक्रमते (एवमिति) प्राणाण्यंयथाभूतार्थज्ञानजनकत्वं तत्त्वं यथार्थत्वं तथाचतदेवात्रप्रतिपाद्यम् ॥

तच्चैक्यं तत्त्वंपदार्थज्ञानाधीनज्ञानमिति । प्रथमं तत्पदार्थो लक्षणप्रमाणाभ्यां निरूप्यते । तत्र लक्षणं द्विविधम्, स्वरूपलक्षणं तटस्थलक्षणं चेति । तत्र स्वरूपमेवलक्षणं, स्वरूपलक्षणं यथा "सत्यं ज्ञानमनंतं ब्रह्म" इति । अत्र सत्यादिकं स्वरूपलक्षणम् ॥

तत्प्रतिपादनं पदार्थप्रतिपादनं पदार्थप्रतिपादनाधीनमतः पदार्थो निरूप्यत इत्याह ( तच्चैक्यमिति ) इति इतिहेतोः प्रथमोपात्तत्वात्प्रत्यक्षाद्यगोचरत्वादभ्यर्हितत्वाच्चादौतत्पदार्थो निरूप्यते इत्यर्थः । तत्रलक्षणप्रमाणयोरसाधारणधर्मोलक्षणंस्वरूपं सद्व्यावर्तकमिति मुख्यत्वात्स्वरूपलक्षणं लक्षयति ( तत्रेति ) तत्पदार्थलक्षणस्यप्रकृतत्वाल्लौकिकं प्रकृष्टप्रकाशश्चंद्रइत्यनुदाहृत्य वैदिकमेतदुदाहरति ( यथेति ) आदिपदे-

नज्ञानानंतसंग्रहः । सच्चिदनंतात्मकमेकमेवलक्षणमितिकेचित् । सत्यादिकं प्रत्येकलक्षणमित्यन्ये ॥

**ननु स्वस्य स्ववृत्तित्वाभावे कथं लक्षणत्वमिति चेत्, न, स्वस्यैव स्वापेक्षया धर्मिधर्मभावकल्पनया लक्ष्य लक्षणत्वसंभवात् । तदुक्तम्—**

**आनंदो विषयानुभवो नित्यत्वंचेति सन्ति धर्माः ।**
**अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त इति ॥**

ननु असाधारणधर्मस्य लक्षणत्वात्स्वस्य च स्ववृत्तिधर्मत्वाभावात्कथं सत्यादिकं स्वरूप लक्षणमिति शंकते ( नन्विति ) धर्मेपारमार्थिकत्व विवक्षणेगौरवान्नैवमित्याह ( नेति ) स्वोक्तेपद्मपादाचार्य्यसंमतिमाह ( तदुक्तमिति ) ॥

**तटस्थलक्षणं यावल्लक्ष्यकालमनवस्थितत्वे सति यद्व्यावर्तकं तदेव यथागन्धवत्त्वं पृथिवीलक्षणं महाप्रलये परमाणुषु उत्पत्तिकाले घटादिषु गंधाभावात् । ब्रह्मणि प्रकृते च जगज्जन्मादिकारणत्वम् ।अत्र जगत्पदेन कार्यजातं विवक्षितं, कारणत्वं च कर्तृत्वमतोऽविद्यादौ नातिव्याप्तिः ॥**

द्वितीयं लक्षयति ( तटस्थेति ) स्वरूपलक्षणेतिप्रसंगनिरासाय सत्यन्तम् । लक्ष्यावृत्तितादृशधर्मेतिव्याप्तिनिराकरणाय व्यावर्तकामिति स्पष्टप्रातिपत्त्यर्थं लौकिकमप्युदाहरति ( यथेति ) परमतेनाह ( महाप्रलयइति ) उभयमतेनाह ( उत्पत्तिकालइति ) प्रकृतब्रह्मणस्तात्किमित्यत आह ( प्रकृतइति ) मायादेरपि जगदंतःपातित्वादाह ( कार्येति ) कुलालादावतिव्याप्तिवारणाय (जातमिति) कार्यमात्रमित्यर्थः।कारणत्वमपि प्रधानादिसाधारणमित्यत आह ( कारणत्वंचेति ॥

कर्तृत्वंच तत्तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं ईश्वरस्य तावदुपादानगोचरापरोक्षज्ञानसद्भावेच "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत" इत्यादिश्रुतिर्मानं तादृशचिकीर्षासद्भावे "सोकामयत बहुस्यां प्रजायेय" इत्यादिश्रुतिर्मानं तादृशकृतौच "तन्मनोऽकुरुत" इत्यादिवाक्यम् ॥

एवमपि कथंनिरास इत्याह ( कर्तृत्वंचेति ) अत्र प्रमाणाकांक्षायामाह ( ईश्वरस्येति ) सर्वज्ञः सामान्यतः, सर्वविद्विशेषतः, ब्रह्मकार्य, ब्रह्म हिरण्यगर्भः नाम घट इत्यादि, रूपंशुक्लादि, अन्नं व्रीहियवादि " यः कालकालो गुणीसर्वविद्यः " इत्यादिश्रुतिरादिपदार्थः । यस्मादाकाशादिः स आत्माकामितवानिच्छांकृतवान् बहुधाभवेयं कथमेकस्य बहुधा भवनमित्यत आह ( प्रजायेयेति ) " उत्पद्येय तदैक्षत " इत्याद्याश्रुतिरादिनोपादेया तद्ब्रह्म सप्राणमसृजतइत्याद्याश्रुतिरादिनोपादेया ( त्रितयमिति ) तत्र उपादानगोचरापरोक्षज्ञानवत्त्वं तादृशचिकीर्षावत्त्वं तादृशकृतिमत्त्वमित्येवमित्यर्थः । एकमेव लक्षणं कुतो नेत्यत आह ॥

ज्ञानेच्छाकृतीनां मध्येऽन्यतमगर्भलक्षणत्रितयमिदं विवक्षितम् । अन्यथाव्यर्थविशेषणत्वापत्तेः । अत एव जन्मस्थितिध्वंसानामन्यतमस्यैव लक्षणे प्रवेशः। एवं च प्रकृते लक्षणानि नव संपद्यन्ते । ब्रह्मणो जगज्जन्मादिकारणत्वे च "यतो वा इमानि भूतानि जायंते येन जातानि जीवंति यत्प्रयंत्यभिसंविशंति" इत्यादिश्रुतिर्मानम् ॥

( अन्यथेति ) लक्षणत्रितयाविवक्षणेइत्यर्थः । यत एकलक्षणे विवक्षणे विशेषणवैयर्थ्यमतोविशेषणवैयर्थ्यादेव जन्माद्यन्यतमस्यैव लक्षणे प्रवेश इत्याह ( अतएवेति ) फलितमाह ( एवंचेति ) कार्य्यजातजन्मगोचरापरोक्षज्ञानवत्त्वं तत्स्थितिविषयतद्वत्त्वं तल्लयगोचरतद्वत्त्वं समस्तकार्य्यगोचरचिकीर्षाश्रयत्वंतत्स्थितिविषयकचिकीर्षावत्वं तल्लयगोचरचिकीर्षास्पदत्वं कार्यमात्रजन्मगोचरकृतिमत्त्वं तत्स्थितिविषयककृत्याश्रयत्वं तल्लयगोचरकृत्यास्पदत्वमित्येवंरूपाणीत्यर्थः । ब्रह्मणोजगज्जन्मादिहेतुत्वेपिप्रमाणाकांक्षायामाह ( ब्रह्मणइति ) प्रयंतिप्रलयंगच्छंतिसंतियत्प्रविशंति "सर्वाणिहवाभूतानि आकाशादेवसमुत्पद्यंत आकाशं प्रत्यस्तयंति" इत्याद्याश्रुतिरादिनोपादेया ॥

**यद्वा निखिलजगदुपादानत्वं ब्रह्मणो लक्षणम्। उपादानत्वं च जगदध्यासाधिष्ठानत्वम्। जगदाकारेण विपरिणममानमायाधिष्ठानत्वं वा। एतादृशमेवोपादनत्वमभिप्रेत्य "इदं सर्वं यदयमात्मा सच्च त्यच्चाभवत्" "बहुस्यां प्रजायेय" इत्यादि श्रुतिषु ब्रह्मप्रपंचयोस्तादात्म्यव्यपदेशः घटः सन् घटोभाति घट इष्ट इत्यादिलौकिकव्यपदेशोपि सच्चिदानन्दरूपब्रह्मैक्याध्यासात् ॥**

ननुत्रिभिरस्योपादानत्वसूचनादेकैकस्यलक्षणप्रवेशेतन्नोसिद्ध्यतीत्यरुच्याह ( यद्वेति ) उपादानं च यदभिन्नं कार्य्यमुत्पद्यते तत्तदभेदश्चपृथक् सत्ताशून्यत्वं तच्चाविद्याब्रह्मणोः समानं ब्रह्मण्यध्यस्तस्य पृथक्सत्ताशून्यत्वादित्याशयेनाह ( उपादानत्वंचेति ) तथाचकल्पितविकारसंबंधस्यवास्तवनिर्विकारत्वाविरोधादुपादानत्वेपि विकारशून्यत्वं ब्रह्मणइतिभावः । विपरिणममानमेवोपादानमिति यद्याग्रहस्तर्ह्यस्तूपादानंमा

१ उपादानत्वम् ।

यातथापि स्वाधिष्ठानं ब्रह्मविनातस्यास्तथात्वाभावात्तदधिष्ठानस्याप्यु-च्यमानमुपादानत्वमविरुद्धमिति तथाभूतमायाधिष्ठानत्वमेवलक्षणमस्त्वि त्याशयेनाह ( जगदिति ) नचजगतोमायापरिणामत्वेमानाभावः "मायां तुप्रकृतिंविद्यात्" "मयाध्यक्ष्येणप्रकृतिः सूयते सचराचरं" जगन्माया-परिणामं कार्य्यत्वाच्छुक्तिरूप्यवदिति प्रमाणसत्त्वात् नचबाध्यत्वमुपाधिः साधनव्यापकत्वात् । यद्वा जगज्जडोपादानकं कार्यत्वात्संमतवत्तच्चैकं लाघवात्तदपिश्रुतिस्मृतिप्रामाण्यात्परिशेषादज्ञानं माया अविद्या अज्ञान-मित्यनर्थांतरं, ननुश्रुतिषुजगद्ब्रह्मतादात्म्यव्यपदेशाज्जगदाकारेण विपरि-णममानत्वमुपादानत्वमित्येव तल्लक्षणं कुतोनांगीक्रियत इत्याशंक्य चेतनस्य जडाकारेण परिणामायोगात् कूटस्थनित्यत्वश्रुतिविरोधाच्चो-क्तोपादानत्वाभिप्रायेणैव तासु तथाव्यपदेश इत्याह ( एतादृशमेवेति ) यदिदंसर्वंहिरण्यगर्भादिस्तंबपर्यंतं तदयमात्मेतियश्चौरः सस्थाणुरितिव त्तादात्म्यव्यपदेशः सन्मूतपृथ्व्यादिभूतत्रयं त्यदमूर्तेवाय्वाकाशे तद्रूप-मभवदित्यर्थः । बहु स्यां बहुतादात्म्यवान्भवेय स्वप्नद्रष्टुः स्वाप्नपदार्थ-तादात्म्यवदितिविवेकः । आदिपदेन "सर्वंखल्विदं ब्रह्म, ऐतदात्म्यमिदं सर्वम्" इत्याद्याः श्रुतय उपादेयाः । एवंलौकिकोपितादात्म्यव्यपदेशो ऽध्यासकृत एवेत्याह ( घटःसन्निति ) ॥

**नन्वानंदात्मकचिदध्यासाद्घटादेरिष्टत्वव्यवहारेदुःख स्यापि तत्राध्यासात्तत्रापि इष्टत्वव्यवहारापत्तिरिति चेत्, न, आरोपे सति निमित्तानुसरणं नतु निमित्त मस्तीत्यारोप इत्यभ्युपगमेन दुःखादौ सच्चिदंशाध्या सेप्यानंदांशाध्यासाभावात् ॥**

अतिप्रसंगं शंकते (नन्विति) घटादिष्विष्टत्वव्यवहारदर्शनादानंदाध्या-सस्तत्रवर्ण्यते तददर्शनान्नदुःखआनंदांशाध्यासइत्याह (नेति) आदिपदंदुः खसाधनपरं सच्चिदंशाध्यासेपि तत्तादात्म्याध्यासेपि । एवमग्रेपि ॥

जगति नामरूपांशद्वयव्यवहारस्तु अविद्यापरिणामा त्मकनामरूपसंबंधात् ।

तदुक्तम्-

अस्ति भाति प्रियं रूपं नाम चेत्यंशपंचकम् ॥

आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयमिति ॥

एवंप्रपंचेनामरूपव्यवहारः किंकृत इत्यत आह ( जगतीति ) स्वोक्ते-भियुक्तवाक्यमुदाहरति । तदुक्तमिति ॥

अथ जगतो जन्मक्रमो निरूप्यते ॥

एवंस्वरूपतटस्थलक्षणाभ्यांतत्पदार्थंलक्षयित्वाजगदुत्पत्तिनिरूपणं प्रतिजानीते ( अथेति ) ॥

तत्र सर्गाद्यकाले परमेश्वरः सृज्यमानप्रपंचवैचित्र्यहेतुप्राणिकर्मसहकृतोऽपरिमितानिरूपितशक्तिविशेष विशिष्टमायासहितः सन्नामरूपात्मकनिखिलप्रपंचं प्रथमं बुद्धावाकलय्येदं करिष्यामीति संकलपयति "तदैक्षत बहुस्यां प्रजायेय" इति "सोकामयत बहुस्यां प्रजायेय "इत्यादिश्रुतेः। तत आकाशादीनि पंचभूतानि अपंचीकृतानि तन्मात्रपदप्रतिपाद्यानि उत्पद्यन्ते। तत्राकाशस्य शब्दो गुणः । वायोस्तु शब्दस्पर्शौ । तेजसस्तु शब्दस्पर्शरूपाणि । अपांतु शब्दस्पर्शरूपरसाः । पृथिव्यास्तु शब्दस्पर्शरूप रसगंधाः ॥

आकलय्येदमित्थमित्यालिख्यपरमेश्वरेवैषम्यनिरासार्थमुक्तं सृज्यमानेति । ननुतस्यकूटस्थत्वात्कथं तत्रसंकल्पादिकमित्याशंकानिवृत्त्यर्थ-

मुक्तमपरिमितेत्यादि प्रमाणमाह ( तदिति ) तन्मनोकुरुतेत्यादिश्रुति-रादिपदादुपादेया ततईक्षणसंकल्पप्रयत्नानंतरं वियदधिकरणंमनसिनिधायाह ( आकाशादीनीति ) तथाचश्रुतिः " तस्माद्वा एतस्मादात्मनः-आकाशस्सम्भूतआकाशाद्वायुर्वायोरग्निरग्नेरापःअद्भ्यःपृथिवी" इति। अपंचीकृतभूतानामेव पुराणादिषुतन्मात्रपदप्रतिपाद्यता इत्याशयेनाह(तन्मात्रेति ) पंचीकृतभूतेषुशब्दादिगुणोपलब्धेरपंचीकृतेष्वप्यनुमानासिद्धान्तानाह ( तत्रेति ) ॥

नच शब्दस्याकाशमात्रगुणत्वं वाय्वादावपि तदुपलंभात् । नचासौ भ्रमः बाधकाभावात् ।इमानि भूतानि त्रिगुणमायाकार्याणि त्रिगुणानि गुणास्सत्त्वरजस्तमांसि एतैश्च सत्त्वगुणोपेतैः पंचभूतैर्व्यस्तैः पृथक् पृथक् क्रमेण श्रोत्रत्वक्चक्षूरसनघ्राणानि पंचज्ञानेन्द्रियाणि जायंते ।एतेभ्यः पुनराकाशादिगतसात्त्विकांशेभ्यःमिलितेभ्यः मनोबुद्ध्यहंकारचित्तानि जायंते । श्रोत्रादीनां पंचानां क्रमेणदिक्वातार्कवरुणाश्विनोऽधिष्ठातृदेवताः मन आदीनां चतुर्णां क्रमेण चन्द्रचतुर्मुखशंकराच्युताः अधिष्ठातृदेवताः ॥

अपंचीकृताकाशादिभूतेषु नैयायिकमतंनिरस्यति (नचेति)पंचीकृतवाय्वादौ तदुपलंभादपंचीकृतवाय्वादावपि तदुपलंभ इतिभावः ।ननुजलादावपि गंधोपलंभात्कथंतस्य पृथिवीमात्रगुणत्वमितिचेन्न तस्य पंचीकृतपृथिव्यंशसंबंधकृतत्वेन जलादेः पृथिव्यकार्यत्वेनबाधकसद्भावेनचभ्रमत्वात्। एतेषां त्रिगुणात्मकत्वेपि सत्त्वगुणप्रधानेभ्य एभ्यो यदुत्पद्यते तदाह ( एतैश्चेति ) एतैरपंचीकृतैः मनसः स्थानं गलांतरं बुद्धेर्वेदनं अहं

१ पंचीकृतभूतनिष्ठाः शब्दादिगुणाःकारणपूर्वकाकार्यत्वात् घटरूपवत् ।

कारस्यहृदयं चित्तस्यनाभिरितिशारीरकोपनिषदि मन आदिगोलका-न्युक्तानिदिक् वातार्कप्रचेताश्वीति भागवतमनुसृत्या ( श्रोत्रादीना-मिति)यद्यपि सुबालोपनिषदि घ्राणस्य पृथिवीदेवतोक्ता तथापि पृथि-व्यभिमानिन्या देवताया अध्यात्मना तदधिष्ठातृत्वादविरोधः ॥

एतैरेवरजोगुणोपेतैः पंचभूतैर्व्यस्तैर्यथाक्रमं वाक्पा-णिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि जायन्ते । तेषांच क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतयोऽधिष्ठातृ देवताः, रजोगुणोपेतपंचभूतैरेवमिलितैः पंचवायवः प्राणापानव्यानोदानसमानाख्या जायन्ते। तत्र प्राग्ग मनवान् वायुः प्राणः नासादिस्थानवर्ती, अर्वाग्गमन वानपानः पाय्वादिस्थानवर्ती, विष्वग्गतिमान्व्यानः अखिलशरीरवर्ती, ऊर्ध्वगमनवानुत्क्रमणवायुरुदानः कंठस्थानवर्ती, अशितपीतान्नादिसमीकरणः समानः नाभिस्थानवर्ती। तैरेव तमोगुणोपेतैरपंचीकृतभूतैः। पंचीकृतानि जायंते। "तासां त्रिवृत्तं त्रिवृतमेकैकां करवाणि" इति श्रुतेः पंचीकृतोपलक्षणार्थत्वात्॥

रजःप्रधानानामेषां कार्य्यमाह ( एतैरेवेति ) तेषु पंचवायुषुप्राणं लक्षयति ( प्रागिति ) सर्वदोर्ध्वगतिमानित्यर्थः। तेनोत्क्रांतिसमयउदान-स्योर्ध्वगतिमत्त्वेपिनातिप्रसंगः। "वायुःप्राणोभूत्वा नासिकेप्राविशत्" इत्यै-तरेयश्रुतिमनुसृत्याह ( नासादीति ) नाभ्यादिनासिकापर्यंतानि स्था-नान्यादिपदार्थः। अपानं लक्षयति (अर्वागिति) अधोगमनवान् नाभ्या-दिपायुपर्यंतस्थानान्यादिशब्दार्थः । तथाचैतरेयश्रुतिः "मृत्युरपानो भूत्वानाभिंप्राविशत्" इति। व्यानं लक्षयति ( विष्वगिति) विष्वगामन-वान्सर्वतोगमनवान् उदानलक्षणमाह ( ऊर्ध्वमिति ) प्राणेऽतिप्रसंगमा-

शंक्याह ( उत्क्रमणेति ) लोकांतरयात्राकालऊर्ध्वगमनवानित्यर्थः "अथै-कयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयाति" इत्यादिप्रश्नोपनिषद्वाक्यमत्र प्रमाणम्[1]यद्वायत्पीताशितपानीयान्नाद्युद्वाराक्रियोत्क्रमणं तद्धेतुस्तदर्थमूर्ध्व गमनवानित्यर्थः । समानंलक्षयति (अशितेति) अस्यसकलशरीरवर्तित्वेपि मुख्यस्थानमाह (नाभीति) प्राणादीनां लक्षणान्युक्तानि मैत्रेयोपनिषदि । अथयोयमूर्ध्वमुत्क्रामति एषवावसप्राणः योयमर्वाचं संक्रामति येनैताःशिरा अनुव्याप्ताः योयं पीतमशितमुद्गिरति योयंस्थविष्ठमन्नंधातुमपाने स्थापयाति अणिष्ठं चांगे समानयाति"इति तमोगुणप्रधानानामेषां कार्यमाह(तैरेवेति) ननु त्रिवृत्करणस्य श्रुतिमूलकत्वात्त्रिवृत्कृतभूतानीति वक्तव्ये पञ्चीकृतभू-तानीति श्रुतिविरुद्धमित्यत आह ( तासामिति ) तेजोबन्नरूपाणां मध्ये एकं तेजोभूतं द्विधा विभज्य तयोरेकं पुनर्द्विधा विभज्य तयोरंश-योरबन्नयोः संयोजनम् । तथाजलंद्विधाविभज्य तयोरेकं भागं पुनर्द्विधावि-भज्य तयोरंशयोस्तेजःपृथिव्योः संयोजनम् । एवं पृथिवीं द्विधाविभज्य-तयोरेकंभागं पुनर्द्विधाविभज्य तयोरंशयोर्जलतेजसोः संयोजनमित्येवं त्रिवृतं त्रिवृतं करवाणीति । यद्यपि छांदोग्ये त्रिवृत्करणमुक्तम् । तथा-पि तद्वाक्यस्योक्तभूतपंचोत्पत्त्यनुसारित्वात्तस्याश्च पंचभूतोत्पत्तिपरत्वेन सूत्रकारैः सिद्धांतितत्वात्त्रिवृत्करणस्यापि पंचीकरणोपलक्षणार्थत्वं न्याय्यमिति भावः ॥

**पंचीकरणप्रकारश्चेत्थम् । आकाशमादौद्विधा विभज्यतयोरेकभागं पुनश्चतुर्द्धाविभज्य तेषां चतुर्णामंशानां वाय्वादिषु चतुर्षु भूतेषु संयोजनं, एवं वायुं द्विधा विभज्य तयोरेकं भागं चतुर्द्धा विभज्य तेषां चतुर्णामंशानामाकाशादिषु संयोजनम् । एवं तेज आदीनामपि । तदेवमेकैकभूतस्यार्द्धं स्वांशात्मकमर्द्धांतरं**

---

१ मैत्रेयोपनिषच्छ्रुतिमनुसृत्य मूलस्थोदानलक्षणवाक्यं लक्षणांतरपरत्वेन बोध-याति यद्वेति । २ उत्क्रमणार्थम् ।

चतुर्विधभूतमयमिति पृथिव्यादिषु स्वांशाधिक्यात्पृथिव्यादिव्यवहारः ॥

तदुक्तम्-

"वैशेष्यात्तुतद्वादस्तद्वादः" इति ॥

ननु पंचानामपि पंचात्मकत्वे कथं पृथिवीयमिदं जलमित्यादि व्यपदेश इत्याशंक्याह ( पृथिव्यादिष्विति ) अत्रद्वितीयाध्यायांतर्गतं भगवतो व्यासस्य सूत्रं प्रमाणमित्याह ( तदुक्तमिति ) तुशब्दः शंकानिरासार्थः । विशेषस्य भावोवैशेष्यम् । तस्मात्स्वस्वभागस्य भूयस्त्वात्तद्वादः पृथिवीयमिदं जलमित्यादि व्यपदेशस्तद्वादपदाभ्यासोध्यायसमाप्तिसूचनार्थः । एतेन पंचीकरणं संप्रदायाध्वसिद्धमपि नादरणीयं तन्मूलभूतश्रुतिसूत्रयोरभावात्,अन्यथा गगनपवनयोश्चाक्षुषत्वापत्तेरिति प्रत्युक्तम् । श्रुतिसूत्रयोरुपलक्षणार्थत्वादन्यथा पुराणवाक्यानां निरालंबनापातादपंचीकृतेतरभूतगुणानामितरस्मिन्पंचीकृतेप्यनुपलब्धेः। तथाच यथापंचीकृततेज आदावपंचीकृतस्वगुणानामेवभानं नत्वपंचीकृतस्वेतरगुणानां तथाकाशवाय्वोरपीति सर्वथा संप्रदायसिद्धपंचीकरणमादरणीयमितिभावः ॥

पूर्वोक्तैरपंचीकृतैर्लिङ्गशरीरं परलोकयात्रानिर्वाहकं मोक्षपर्य्यंतं स्थायि मनोबुद्धिभ्यामुपेतं ज्ञानेन्द्रियपंचककर्मेंद्रियपंचकप्राणादिपंचकसंयुक्तं जायते ।

तदुक्तम्-

पंचप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपंचीकृतभूतोत्थं सूक्ष्मांगं भोगसाधनम् ॥[१] इति॥

तच्च द्विविधं परमपरंच ।

तत्र परं हिरण्यगर्भलिंगशरीरं अपरमस्मदादिलिङ्ग

---

१ अपंचीकृतेतरभूतंपृथिवीजलम् ।

**शरीरं तत्र हिरण्य गर्भलिङ्गशरीरंमहत्तत्त्वम् । अस्मदादिर्लिंगशरीरमहंकार इत्याख्यायते ॥ १९**

तेषामेवगुणत्रयोपेतानां मन आदिसमुदायात्मकं लिंगशरीरं कार्य्यमित्याह ( पूर्वोक्तैरिति ) ननूपलभ्यमानस्थूलशरीरेणैव समस्तकार्य्यनिर्वाहात्किमर्थकमेतदित्यत आह ( परलोकेति ) तस्यमोक्षेप्यभावाभावमाशंक्याह ( मोक्षेति ) आत्यंतिकप्रलयपर्यन्तं स्थायात्यथः। तेषां समुदायः शरीरमित्यादिमैत्रेयश्रुतिमूलकमभियुक्तवाक्यमत्र प्रमाणमित्याह (तदुक्तमिति)सूक्ष्मांगं सूक्ष्मशरीरम् । तत्र ब्रह्मांडव्यापित्वादाद्यं परं देहमात्रव्यापित्वाद्द्वितीयमपरमित्याशयेनाह ( तत्रेति ) ॥

**एवं तमोगुणयुक्तेभ्यः पंचीकृतभूतेभ्यो भूम्यंतरिक्ष स्वर्महर्जनस्तपःसत्यात्मकस्योर्ध्वलोकसप्तकस्य अतलवितलसुतलतलातलरसातलमहातल पाताला ख्याधोलोकसप्तकस्य ब्रह्मांडस्य जरायुजांडजस्वेद जोद्भिज्जाख्यचतुर्विधस्थूलशरीराणामुत्पत्तिः । तत्र जरायुजानि जरायुभ्यो जातानि मनुष्यपश्वादिश रीराणि । अंडजानि अण्डेभ्यो जातानि पक्षिपन्नगा दिशरीराणि । स्वेदजानि स्वेदाज्जातानि यूकामशका दीनि । उद्भिज्जानि भूमिमुद्भिद्यजातानि वृक्षादीनि । वृक्षादीनामपिपापफलभोगायतनत्वेन शरीरत्वम् ॥**

सुबालश्रुतौ संन्यासविधाप्यारण्यकश्रुतौच चतुर्दशभुवनात्मकब्रह्मांडोत्पत्तिरभिहिता तदनुसृत्याह ( एवमिति ) "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्यादिवचनमनुसृत्याह ( वृक्षादीनामिति ) ॥

**तत्र परमेश्वरस्य पंचतन्मात्राद्युत्पत्तौ सप्तदशावय**

वोपेतलिंगशरीरोत्पत्तौच हिरण्यगर्भस्थूलशरीरो त्पत्तौ साक्षात्कर्तृत्वं इतरनिखिलप्रपंचोत्पत्तौ हिर ण्यगर्भादिद्वारा "हंताहमिमास्तिस्रो देवताः" "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतेः। हिरण्यगर्भो नाम मूर्तित्रयादन्यः प्रथमो जीवः ॥

स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥
आदि कर्त्ता स भूतानां ब्रह्माग्रे समवर्तत ॥ १ ॥

"हिरण्यगर्भः समवर्तताग्रे भूतस्य" इत्यादि श्रुतेः। एवं भूतभौतिकसृष्टिर्निरूपिता ॥

नन्वशरीरस्यपरमात्मनः शरीरसाध्यब्राह्मणादिकार्य्यं प्रति कथं हेतुत्वमित्याशंक्य तत्र परंपरयेतिदर्शयति ( तत्रेति ) कार्यकदेवलिंगशरीरस्य द्विविधस्य "योवैब्रह्माणंविदधातिपूर्वम्" इत्यादिश्रुति। हिरण्यगर्भस्य-साक्षाद्ब्रह्मकार्यत्वे प्रमाणम्। आदिपदं मरीच्यादि संग्राहकम्। हिरण्यगर्भादि द्वारापरेशस्य कर्तृत्वे श्रुतिं प्रमाणयति ( हंतेति) देवताः तेजोबन्नरूपाः। ननु हिरण्यगर्भस्य परेशमूर्तित्रयांतर्गतत्वेन कथंजीवत्वमित्याशंक्याह ( हिरण्यगर्भइति ) अत्रप्रमाणमाह ( सइति )शरीरीति श्रुत्या तस्यजीवत्वावधारणान्मूर्तित्रयान्यत्वेश्रुतिप्रमाणमिति भावः। "ब्रह्मादेवानां प्रथमं स बभूव" इत्याद्या श्रुतिरादिपदादेया, सृष्टिप्रतिपादनोपसंहारपूर्वकं प्रलयनिरूपणं प्रतिजानीते ( एवमिति ) ॥

इदानीं प्रलयो निरूप्यते ॥

प्रलयो नाम त्रैलोक्यनाशः। सच चतुर्विधः, नित्यः प्राकृतो नैमित्तिक आत्यन्तिकश्चेति । तत्र नित्यः प्रलयः सुषुप्तिः, तस्याः सकलकार्यप्रलयरूपत्वात्।

धर्माधर्मपूर्वसंस्काराणां च तदाकारणात्मनावस्था नम् । तेन सुषुप्तोत्थितस्य नसुखदुःखाद्यनुभवानुप पत्तिः, नवास्मरणानुपपत्तिः, नच सुषुप्तावन्तःकर णस्य विनाशे तदधीनप्राणादिक्रियानुपपत्तिः;वस्तुतः श्वासाद्यभावेपि तदुपलब्धेः पुरुषांतरविभ्रममात्रत्वात् सुप्तशरीरोपलंभवत् ॥

भूर्लोकेऽधोलोकानामंतर्भावः । स्वर्लोकेतदुपरिष्ठानामितित्रिलोकीपक्षे सप्रलयः नित्यादिभेदन त्रिविधः।चतुर्दशलोकीपक्षे सनैमित्तिक इत्येव॥ तस्य चातुर्विध्यमभिप्रेत्याह ( सचेति )प्रलयोनामविनाश इतिपाठःस्पष्टः। तत्राद्यं लक्षयति ( तत्रेति ) नित्यप्रालयः प्रतिदिनं प्रविलयः''सुषुप्ति-काले सकले विलीनः''इति कैवल्यश्रुतिमनुसृत्याह ( तस्याइति ) नन्वेवं तर्हिसुखादिहेतोः धर्मादेः स्मृतिहेतोः संस्कारस्य च तदानीं प्रविलयादु-त्थितस्य कथंसुखादिभेदभोगः,पूर्वपदार्थस्मरणंचेत्याशंक्याह(धर्माधर्मेति) कारणात्मनाऽविद्यात्मनास्वकार्य्यकारणात्मना वा । नन्वंतःकरणस्यापि तदानीं कारणात्मनावस्थानात् कथं तदधीनप्राणनादिक्रियेत्याशंक्यदेहहे तुधर्मादेर्विनाशेपि देहास्थितिवत्तत्क्रियोपलब्धिरापिनानुपपन्नेत्याह(नचेति) ननु कारणाभावे द्वयमपि विरुद्धमित्यपरितोषादाह ( वस्तुतइति ) ॥

न चैवं सुप्तस्य परेतादविशेषः, सुप्तस्य हि लिंगश रीरं संस्कारात्मनाऽत्रैव वर्तते, परेतस्य तु लोकांतरे इति वैलक्षण्यात् । यद्वा अंतःकरणस्य द्वे शक्ती, ज्ञानशक्तिः क्रियाशक्तिश्चेति । तत्र ज्ञानशक्तिविशि ष्टान्तःकरणस्य सुषुप्तौ विनाशः, न क्रियाशक्तिविशि ष्टस्येति प्राणाद्यवस्थानमविरुद्धं"यदा सुप्तः स्वप्नं न कंचनपश्यति, अथास्मिन्प्राण एवैकधा भवति,

अथैनं वाक्सर्वैर्नामभिः सहाप्येति सता सोम्य तदा संपन्नो भवति, स्वमपीतो भवति" इत्यादि श्रुतिरुक्तसुषुप्तौ मानम् ॥

सुप्तस्यमृतादविशेषमाशंक्य परिहरति ( नचेति ) जाग्रदवस्थायां परेतस्यलिंगशरीरं जन्मांतरीयतत्तत्पदार्थसंस्कारजन्यतत्तत्पदार्थाकारात्मनालोकांतरेस्थितं सुप्तस्यतुतादृशसंस्कारात्मनात्रैवेत्यर्थः। ननु पुरुषांतरस्य देहः प्राणक्रिया च भ्रमात्प्रतीयते,नकर्मेन्द्रियव्यापारादिकामिति वैषम्ये नियामकाभावमालक्ष्याह ( यद्वेति ) आदिपदमपानादि संग्राहकम्।देहावस्थानं तु मृतशरीरावस्थानवदविरुद्धमितिभावः।अत्रप्रमाणमाह ( यदेति ) अथतदानीमस्मिन्सुप्ते सति एकधा एकः एनं प्राणं अप्येति प्रविशति । कौषीतकिश्रुतिमुदाहृत्यच्छांदोग्यश्रुतिमुदाहरति ( सतेति ) हेसौम्य तदा सुषुप्तौ सत्ता सद्रूपेण ब्रह्मणा जीवः संपन्नोऽभेदं गतो भवति स्वमपीतो विलीनस्तिरोहितोपाधिर्भवतीत्यर्थः । सति संपद्यनविदुरित्याद्या श्रुतिरादिपदेन ग्राह्या ॥

प्राकृतप्रलयस्तु कार्यब्रह्मविनाशनिमित्तकः सकलकार्यनाशः । यदातु प्रागेवोत्पन्नब्रह्मसाक्षात्कारस्य कार्य्यब्रह्मणो ब्रह्मांडाधिकारलक्षणप्रारब्धकर्म्मसमाप्तौ विदेहकैवल्यात्मिका परामुक्तिः तदातल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणा सहविदेहकैवल्यम् ॥

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसंचरे ॥
परस्यांते कृतात्मानः प्रविशंति परं पदम्"इति श्रुतेः ॥

---

१ तत्तद्देहरूपपदार्थजनकादृष्टरूपसंस्कार ।

एवं नित्यप्रलयमभिधाय प्राकृतं निरूपयति ( प्राकृतेति ) सकल कार्यविनाशः प्रकृतौलयः, सुषुप्तेस्तुकार्य्यब्रह्मविनाशनिमित्तकसकलकार्य्यविनाशरूपत्वाभावान्नतत्रातिव्याप्तिः। प्रागेवोत्पन्नपरब्रह्मसाक्षात्कारस्यहिरण्यगर्भस्य ब्रह्मांडाधिकारानिर्वाहकप्रारब्धकर्मपरिसमाप्तौ सत्यां यदाविदेहकैवल्यात्मिका परममुक्तिस्तदातल्लोकवासिनामप्युत्पन्नब्रह्मसाक्षात्काराणां ब्रह्मणासहतथाभूतमुक्तिरित्यर्थः। उक्तार्थेश्रुतिं प्रमाणयति ( ब्रह्मणेति ) प्रतिसंचरे प्राकृतेप्रलये संप्राप्ते सति परस्य हिरण्यगर्भस्यांते मुक्तिसमये ते सत्यलोकवासिनः कृतात्मनः प्राप्ततत्त्वसाक्षात्काराः सर्वेब्रह्मणा सह परंपदंविदेहकैवल्यं प्रविशंतीत्यर्थः॥

एवं स्वलोकवासिभिः सह कार्य्ये ब्रह्मणि मुच्यमाने तदधिष्ठितब्रह्माण्डतदन्तर्वर्त्ति निखिललोकतदंतर्वर्त्ति स्थावरादीनां भौतिकानां भूतानां च प्रकृतौमायायांचलयः नतु ब्रह्मणि बाधरूपविनाशस्यैव ब्रह्मनिष्ठत्वात्। अतः प्राकृत इत्युच्यते। कार्यब्रह्मणो दिवसावसाननिमित्तकस्त्रैलोक्यमात्रप्रलयः नैमित्तिकप्रलयः ब्रह्मणोदिवसश्चतुर्युगसहस्रपरिमितकालः। "चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते" इति वचनात्॥ प्रलयकालो दिवसकालपरिमितः रात्रिकालस्य दिवसकालतुल्यत्वात् प्राकृतप्रलयेनैमित्तिकप्रलये च पुराणवचनानि॥

द्विपरार्द्धेत्वतिक्रांते ब्रह्मणः परमेष्ठिनः॥
तदा प्रकृतयः सप्त कल्प्यंते प्रलयाय हि॥ १॥
एष प्राकृतिको राजन् प्रलयो यत्र लीयते॥

इति वचनं प्राकृतप्रलये मानम्।

एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् ॥
शेतेऽनंतासने नित्यमात्मसात्कृत्य चाखिलम् ॥१॥
इति वचनं नैमित्तिकप्रलये मानम् ॥

नन्वेवं तर्हि ब्राह्म्योऽयंप्रलयो न प्राकृत इत्याशंक्य तत्त्वविदांब्रह्मप्रवेशे प्यतत्त्वविदां प्रकृतौ प्रवेशात्प्राकृत इत्याह ( एवमिति ) मायायां लयोनिवृत्तिः । तत्र हेतुमाह ( बाधेति ) ब्रह्मनिष्ठत्वाद्ब्रह्मधर्मत्वाद्ब्रह्म णितदात्मनास्थितत्वादिति वानैमित्तिकं तं दर्शयति ( कार्येति ) त्रैलो-क्यभूर्भुवःस्वरितिलोकत्रयंब्रह्मदिवसस्यकिंप्रमाणमित्यपेक्षायामाह (ब्रह्म-णइति ) नैमित्तिकप्रलयकालोप्येतावानेवेत्याह ( प्रलयेति ) ॥

तुरीयप्रलयस्तु ब्रह्मसाक्षात्कारनिमित्तकः सर्वमोक्षः सचैकजीववादे युगपदेव, नानाजीववादे तु क्रमेण "सर्व एकी भवन्ति" इत्यादि श्रुतेः । तत्राद्यास्त्रयोपि लयाः कर्मोपरतिनिमित्ताः, तुरीयस्तु ज्ञानोदयनि मित्तः लयो ज्ञानेन सहैवेति विशेषः ॥

आत्यंतिकं चतुर्थप्रलयं निरूपयति ( तुरीयेति ) सर्वमोक्षअज्ञानेन सह कार्य्यविनाशः । तुरीयप्रलयेश्रुतिंप्रमाणयति ( सर्वइति ) यत्र तु सर्वमात्मैवाभूत्तत्रकेनकंपश्येदितीत्याद्याश्रुतिरादिपदेनाद्या।लयत्वाविशे-षेपि विशेषमाह ( तत्रेति ) तत्र चतुर्षु प्रलयेषु ॥

एवं चतुर्विधप्रलयो निरूपितः।तस्येदानीं क्रमो निरूप्यते॥

प्रलयनिरूपणमुपसंहरंस्तत्क्रमे विप्रतिपत्तेस्तन्निरूपणं प्रतिजानीते ( एवमिति ) ॥

भूतानां भौतिकानांच न कारणलयक्रमेण लयः कार णलयसमये कार्याणामाश्रयांतराभावेनावस्थानानु

पपत्तेः।किंतु सृष्टिक्रमविपरीतक्रमेण तत्तत्कार्यनाशे तत्तज्जनकादृष्टनाशस्यैव प्रयोजकतया उपादानना शस्याप्रयोजकत्वात् । अन्यथा न्यायमते महाप्रलये पृथिवीपरमाणुगतरूपरसादेरविनाशापत्तेः ॥

स्वसिद्धांतं वक्तुमादौ न्यायमतं दूषयति ( भूतानामिति ) तर्हिकेन क्रमेणलयइतिपृच्छति ( किंत्विति ) उत्तरमाह ( सृष्टीति ) सृष्टिक्रम-विपरीतक्रमेणलय इत्यनुषज्यते । तत्रहेतुमाह ( तत्तत्कार्यनाशइति ) अनुगतंहिप्रयोजकमस्यत्वननुगतत्वादप्रयोजकत्वमित्याशयः। विपक्षेदोष-माह ( अन्यथेति ) ॥

तथाच पृथिव्याः अप्सु, अपां तेजसि, तेजसो वायौ, वायोराकाशे, आकाशस्य जीवाहंकारे, तस्यहिरण्य गर्भाहंकारे, तस्य चाविद्यायामित्येवं रूपाः प्रलयाः । तदुक्तम् विष्णुपुराणे—

जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ॥
तेजस्यापः प्रलीयंते तेजो वायो प्रलीयते ॥ १ ॥
वायुश्च लीयते व्योम्नि तच्चाव्यक्ते प्रलीयते ॥
अव्यक्तं पुरुषे ब्रह्मन् निष्कले संप्रलीयते ॥२॥इति।

एवं विधप्रलयकारणत्वं तत्पदार्थस्य ब्रह्मणस्तटस्थ लक्षणम् ॥

उपादाननाशस्य प्रयोजकत्वे सृष्टिक्रमविपरीतक्रमं दर्शयति ( तथा चेति ) कार्यावस्थानानुपपत्तेरननुगमाच्चोपादाननाशस्याप्रयोजकतया ऽदृष्टनाशस्यप्रयोजकत्वेसतिहिरण्यगर्भाहंकारेमहत्तत्त्वे।अत्रप्रमाणमाह(तदु क्तमिति ) अत्रेन्द्रियादिद्वाराव्यक्तेलयोद्रष्टव्य आकाशमिन्द्रियेषु इन्द्रि-याणि तन्मात्रेषु तन्मात्राणिभूतादौ विलीयंत इति सुवालोपनिषद्वच-

नानुसारात्। नचेदमप्रासंगिकं तत्पदार्थलक्षणस्थप्रलयपदार्थनिरूपणं विना तदबोधादित्याशयेनाह ( एवंविधेति ) ॥

**ननु वेदांतैर्ब्रह्मणि जगत्कारणत्वेन प्रतिपाद्यमाने सति सप्रपंचब्रह्मस्यादन्यथासृष्टिवाक्यानामप्रामाण्या पत्तेरितिचेत्, न, नहि सृष्टिवाक्यानां सृष्टौ तात्पर्यं किंतु अद्वितीये ब्रह्मण्येव ॥**

ननूक्तमिदंतत्पदार्थलक्षणंयथार्थं किंवाऽयथार्थम्। आद्ये ब्रह्मणः सप्रपंचत्तापत्तिः, नद्वितीयस्तत्प्रतिपादकश्रुत्यादिवाक्यानामप्रामाण्यापत्तेरिति शंकते ( नन्विति ) यथाशाखाग्रसंलग्नस्यापि चंद्रस्य तदग्रसंलग्नतां प्रकल्प्य शाखाग्रे चंद्र इति तटस्थलक्षणम्। तथामिथ्याभूतस्य प्रपंचस्य ब्रह्मासंबंधेपि श्रुतिषु तद्बोधनायजगज्जनकत्वं प्रकल्प्य तल्लक्षणाभिधानान्मैवमित्याशयेनाह ( नेति ) "नेह नानास्ति किंचन। ननिरोधोनचोत्पत्तिः" इत्यादिश्रुतिबाधितेऽर्थे नास्ति सृष्टिश्रुति वाक्यानां तात्पर्यं येनतेषामप्रामाण्यं भवेदित्याह ( नहीति ) ननु प्रतीयमानेऽर्थे तात्पर्याभावे क्वतर्हितात्पर्यमितिपृच्छति" ( किंत्विति ) "विषंभुंक्ष्व" इतिवाक्यस्याप्तवाक्यत्वाद्बाधितेप्रतीयमानेर्थेतात्पर्याभावेन शत्रुगृहभोजननिषेधपरत्वं यथा, तथोक्तवाक्यानामपि श्रुतिबाधितप्रतीयमानार्थे तात्पर्यायोगेनाद्वितीयब्रह्मपरत्वेन तस्यैवप्रतिपादकत्वं यत्परः शब्दः स शब्दार्थ इत्यभियुक्तोक्तेरित्युत्तरमाह अद्वितीयइति ॥

**तत्प्रतिपत्तौ कथं सृष्टेरुपयोगः इत्थं यदि सृष्टिमनुपन्यस्य निषेधो ब्रह्मणि प्रपंचस्य प्रतिपाद्येत तदा ब्रह्मणि निषिद्धस्य प्रपंचस्य वायौ प्रतिषिद्धस्य रूपस्येव ब्रह्मणोऽन्यत्रावस्थानशंकायां न निर्विचिकित्समद्वितीयत्वं प्रतिपादितं स्यात्। ततः सृष्टिवाक्या**

द्ब्रह्मोपादेयत्वज्ञाने सत्युपादानं विना कार्यस्यान्यत्र सद्भावशंकायां निरस्तायां नेतिनेतीत्यादिना ब्रह्म ण्यपि तस्यासत्त्वोपपादने प्रपंचस्य तुच्छत्त्वावगमे निरस्ताखिलद्वैतविभ्रममखंडं सच्चिदानंदैकरसं ब्रह्म सिद्धयतीति परंपरया सृष्टिवाक्यानामप्यद्वितीये ब्रह्म ण्येव तात्पर्यम् ॥

ननु शत्रुगृहभोजनाद्वरं विषभक्षणमिति प्रतीयमानार्थस्य यथा तादृशभोजननिषेधप्रतिपत्तौ विनियोगस्तथा ऽत्रकथं सृष्टेरद्वितीयब्रह्मावबोधने विनियोगः, प्रपंचनिषेधपरैरेवतत्प्रतिपत्तेः, स्पष्टतयाप्रतीयमानान्यार्थकैर्वाक्यैस्तद्बोधनस्य व्यर्थत्वादित्याशयेन शंकते ( तदिति ) यस्मिन्ब्रह्मणि प्रदानमतस्तस्यान्यत्रावस्थानाशंकाभावेन निःसंशयतयामिथ्यात्वसिद्धेरद्वितीयं ब्रह्मसिद्धयतीत्येवं तत्प्रतिपत्तौ प्रतीयमानार्थविनियोग इति समाधत्ते (इत्थमिति) निर्विचिकित्सं संशयरहितं॥

उपासनाप्रकरणपठितसगुणब्रह्मवाक्यानां चोपासना विध्यपेक्षितगुणारोपमात्रपरत्वं, न गुणपरत्वम्। निर्गु णप्रकरणपठितानां सगुणवाक्यानांतु निषेधवाक्या पेक्षितनिषेध्यसंपादकत्वेन विनियोग इति न किंचि दपि वाक्यमद्वितीयब्रह्मप्रतिपादनेन विरुध्यते॥

नन्वेवं सृष्टिवाक्यानामद्वितीयब्रह्मबोधकत्वेपि निर्विचिकित्समद्वितीयत्वं न सिध्यति यएषोंतरादित्ये हिरणमयः पुरुष इत्यादिवाक्यैः सगुणब्रह्मप्रतिपादनादित्याशंक्याह ( उपासनेति ) योषिद्वावगौतमाग्निरित्यादिवदारोपितगुणेनाप्युपासनासंभवेन केवलो निर्गुणश्चेत्यादिश्रुतिविरुद्धार्थपरत्वमुक्तवाक्यानामयुक्तं तथाच सगुणब्रह्मवाक्यानि चित्तै-

काग्र्यद्वाराद्वितीयब्रह्मबोधकानीति भावः।मूर्त्तंचामूर्त्तंच मर्त्यंचामृतंचेत्या-
दिवाक्यानांविनियोगमाह ( निर्गुणेति ) अथात आदेशो नेति नेति
इत्यादीनि निषेधवाक्यानि कर्मकांडवाक्यानामपि व्यावहारिकप्रामा-
ण्यवतां संयोगपृथक्त्वन्यायेनाद्वितीयब्रह्मप्रतिपत्तौ विनियोगमभिप्रेत्याह
( नकिंचिदपीति ) ॥

**तदेवं स्वरूपतटस्थलक्षणलक्षितं तत्पदवाच्यमीश्व
रचैतन्यं मायाप्रतिबिंबितमितिकेचित् । तेषामयमा
शयः--जीवपरमेश्वरसाधारणं चैतन्यमात्रं बिंबं,तस्यैव
बिंबस्याऽविद्यात्मिकायां मायायां प्रतिबिंबमीश्वरचै
तन्यमन्तःकरणेषु प्रतिबिंबं जीवचैतन्यं "कार्योपाधि
रयंजीवः कारणोपाधिरीश्वरः" इति श्रुतेः । एतन्मते
जलाशयगतशरावगतसूर्यप्रतिबिंबयोरिव जीवपरमे
श्वरयोर्भेदः अविद्यात्मकोपाधेर्व्यापकतया तदुपाधि
केश्वरस्यापि व्यापकत्वं अन्तःकरणस्य परिच्छिन्न
तया तदुपाधिकजीवस्यापि परिच्छिन्नत्वम्।एतन्मते
ऽविद्याकृतदोषा जीवे इव परमेश्वरेऽपि स्युरुपाधेः प्रति
बिंबपक्षपातित्वादित्यस्वरसात् ॥**

ननु किंतल्लक्ष्यं यस्येदं लक्षणद्वयमुच्यत इत्याकांक्षायामाह ( तदे-
वमिति ) नन्वविद्यातो "मामाया भेदाभावात्तत्प्रतिबिंबितस्य च जीव-
त्वात्कथं मायायां प्रतिबिंबितं चैतन्यमीश्वर इत्याशंक्याह ( तेषामि-
ति ) तन्मतेजीवेश्वरविभागमाह ( एतदिति ) एवंविधानेकजीववादे दूष-
णाभिधानपूर्वकं मतांतरमवतारयति ( एतन्मतइति ) ॥

**बिंबात्मकमीश्वरचैतन्यमित्यपरे । तेषामयमाशयः—
एकमेवचैतन्यं बिंबत्वाक्रांतमीश्वरचैतन्यं प्रतिबिंबत्वा**

क्रांतं जीवचैतन्यं बिंबप्रतिबिंबकल्पनोपाधिश्चैकजीव वादे अविद्या, अनेकजीववादे तु अन्तःकरणान्येव अविद्यान्तःकरणरूपोपाधिप्रयुक्तो जीवपरभेदः उपाधिकृतदोषाश्च प्रतिबिंबे जीवे एव वर्तते, नतु बिम्बेप रमेश्वरे उपाधेः प्रतिबिंबपक्षपातित्वात्। एतन्मते च गगनसूर्यस्य जलादौ भासमानप्रतिबिंबसूर्यस्येव जीवपरयोर्भेदः ॥

अस्मिन्पक्षे मतद्वयमाह ( बिंबप्रतिबिंबेति ) ॥

ननु ग्रीवास्थमुखस्य दर्पणप्रदेश इव बिंबचैतन्यस्य परमेश्वरस्य जीवप्रदेशेऽभावात्तस्य सर्वांतर्यामित्वं न स्यादिति चेन्न,साभ्रनक्षत्रस्य आकाशस्य जलादौ प्रतिबिंबितत्वे बिंबभूतमहाकाशस्यापि जलादिप्रदेश संबंधदर्शनेन परिच्छिन्नबिंबस्य प्रतिबिंबदेशासंबंधि त्वेप्यपरिच्छिन्नब्रह्मबिंबस्य प्रतिबिंबदेशसंबंधावि रोधात् ॥

नन्वस्मिन्मते पूर्वोक्तदोषाभावेपि दोषांतरमस्तीति शंकते ( नन्विति ) बिंबस्य प्रतिबिंबदेशावर्तित्वनियमादितिभावः।उक्तनियमस्याकाशे व्यभिचारात्परिच्छिन्नबिंबस्य तथात्वेप्यपरिच्छिन्नबिंबस्य तथात्वाभावान्मैवमित्याह ( नेति ) जलादिस्थाकाशमेवभातीतिशंकानिरासार्थमुक्तम् ( साभ्रेति ) ॥

नच रूपहीनस्य ब्रह्मणो न प्रतिबिंबसंभवः रूपवत एवतथात्वदर्शनादितिवाच्यम्, नीरूपस्यापि रूपस्य

**प्रतिबिंबदर्शनात् । नच नीरूपस्य द्रव्यस्य प्रतिबिं बाभावनियमः आत्मनो द्रव्यत्वाभावस्योक्तत्वात् ॥**

नन्वभ्रादिकमेव तत्रप्रतिबिंबतेनाकाशंतस्य रूपरहितत्वाद्रूपवत एव प्रतिबिंबितत्वदर्शनात्तथाच नीरूपस्य ब्रह्मणो नप्रतिबिंबसंभव इत्याशंक्य परिहरति ( नचेति ) किंरूपवत एव प्रतिबिंबउतरूपवतो द्रव्यस्येति विकल्प्याद्यं प्रत्याह ( नीरूपस्यापीति ) द्वितीयमनूद्य दूषयति ( नचेति ) यतः समवायिकारणं गुणाश्रयोवा द्रव्यमत आत्मनस्तुनिर्गुणत्वात्समवायासिद्धेश्चद्रव्यत्वाभावस्योक्तत्वादित्यर्थः । तथाच नीरूपस्यद्रव्यस्याकाशादेः प्रतिबिंबानभ्युपगमेपि नीरूपस्याद्रव्यस्य ब्रह्मणो रूपवत्प्रतिबिंबं संभवत्येवेतिभावः ॥ ३४ ॥

**"एकधा बहुधाचैव दृश्यते जलचन्द्रवत्" "यथा ह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैको नुगच्छन्" इत्यादिवाक्येन ब्रह्मप्रतिबिंबाभावानुमानस्य बाधितत्वाच्च तदेवं तत्पदार्थो निरूपितः ॥**

द्रव्यत्वाभ्युपगमेपि दोषाभाव इत्यभिप्रेत्यहेत्वंतरमाह (एकधेति)एकधाईश्वररूपेण एकःबहुधा जीवात्मना नानारूपः। आदिपदेन "उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मा" इतिवाक्यशेषो ग्राह्यः । ब्रह्मप्रतिबिंबाभावानुमानस्य ब्रह्मनप्रतिबिंबितुमर्हत्यचाक्षुषत्वाद्गंधादिवदित्येवं रूपस्यानुमानस्य । तथाच भगवतो बादरायणस्य सूत्रं "आभास एवच" "अत एवचोपमासूयर्कादिवत्"इति अत्र विस्तरभयात् मूलकृतात्यक्तोवच्छेदवादोपि द्रष्टव्यः। तथाहि घटाकाशवदंतःकरणावच्छिन्नं चैतन्यं जीवस्तदनवच्छिन्नं तदीश्वरः आलोकप्रतिबिंबेगगनप्रतिबिंबितत्वव्यवहारस्य भ्रममात्रमूलकतया बिंबस्य प्रतिबिंबस्थानावस्थानाभावनियमस्यभंगाभावाद्ब्रह्मप्रतिबिंबो न युक्तः । ननु ब्रह्मांडांतरवर्तितत्तदंतःकरणोपाधिभिस्तदंतर्वर्तिचैतन्यस्य सर्वात्मना जीवभावेना-

वच्छेदात्तदवच्छेदरहितचैतन्यात्मकस्येश्वरस्य ब्रह्मांडांतरसत्त्वापत्तिर-त्रापि समानेतिचेन्न अविद्याश्रयत्वांतःकरणसंवलितत्वाद्युपाधिकाज्जीवा-द्भिन्नस्यविद्याविषयत्वांतःकरणासंवलितत्वाद्युपाधिकस्यांतर्यामिण ईश्व-रस्य ब्रह्मांडांतरवस्थानसंभवात् । नच कार्योपाधिरयं जीवः कारणोपा-धिरीश्वर इतिवाक्यविरोधः।तस्यपक्षद्वयेपि तुल्यत्वात् कारणावच्छिन्नस्य कार्यानवच्छिन्नत्वेबाधकाभावात् । नचास्मिन्पक्षेश्रुतिसूत्रविरोधः भाष्य कारैरेवातएवचेति सूत्रंव्याख्याय सूर्यादिवदात्मनः प्रतिबिंबो न युज्यत इति तदाक्षेपकत्वेन "अम्बुवदग्रहणात्तुनतथात्वम्" इतिसूत्रं व्याख्याय "वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवम्"इतिसूत्रे उक्तानुपपत्तिम-गीकृत्यैव श्रुत्युक्तदृष्टांतस्यसोपाधिकस्यात्मनो वृद्धिह्रासादिभाक्त्वं न निरुपाधिकस्येति प्रदर्शनार्थत्वं; नचात्माप्रतिबिंबत इत्यभिहितत्वात् । बृहदारण्यकभाष्यादौ प्रतिबिंबरूपेण प्रवेशो नसंभवतीत्युक्तत्वाच्चेति संक्षेपः;विस्तरस्त्वन्यत्र द्रष्टव्यः । मूलकर्तुरप्ययमेवपक्षोऽभिप्रेतः।प्रत्यक्षप-रिच्छेदे ईश्वरसाक्षीत्यादिप्रकरण एतत्पक्षस्य स्वसंमतत्वेन सूचितत्वा-त्तत्पदार्थनिरूपणमुपसंहरंस्त्वंपदार्थनिरूपणं प्रतिजानीते(तदेवमिति ) ॥

**इदानीं त्वं पदार्थो निरूप्यते ॥**

**एकजीववादेऽविद्याप्रतिबिंबो जीवः, अनेकजीववादे अंतःकरणप्रतिबिंबः । स च जाग्रत्स्वप्नसुषुप्तिरूपाव स्थात्रयवान्, तत्र जाग्रद्दशानामेन्द्रियजन्यज्ञाना वस्था अवस्थांतरे इन्द्रियाभावान्नातिव्याप्तिः इन्द्रिय जन्यज्ञानंचान्तःकरणवृत्तिः, स्वरूपज्ञानस्यानादि त्वात् । सा चान्तःकरणवृत्तिरावरणाभिभवार्थेत्येकं मतम् ॥**

तत्रैकजीववादे तत्स्वरूपमाह ( एकेति ) अविद्याया एकत्वेन तत्प्रति-बिंबस्य जीवस्याप्येकत्वौचित्यादिति भावः॥ तद्योयोदेवानांप्रत्यबुद्ध्यत

स एव तदभवत्तथाऋषीणां तथामनुष्याणांयथाग्नेःक्षुद्राविस्फुलिंगाव्युच्चरं-ति, एवमेवैतस्मादात्मनः सर्वे एत आत्मानइत्यादिश्रुतेः "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इत्यादिस्मृतेः "भोगेनत्वितरे क्षपयित्वा संपद्यत" इत्यादिसूत्रात्। सचस्वात्मभूतानिव घटाकाशस्थानीयान विद्योपस्थापितनामरूपकृतकार्यकारणसंघातानुरोधिनो जीवाख्यान् वि-ज्ञानात्मनः प्रतीष्ट इत्यादिभाष्यादनंतजीवनिर्भासास्पदमेकरसं ब्रह्मेति पद्मपादाचार्योक्तेश्चैकजीववादोऽयुक्त इत्यभिप्रेत्याह ( अनेकेति ) इदमुपलक्षणमविद्यावच्छिन्नोजीव इति मतस्यापि मायाभिरिति बहु-वचनादविद्यायास्तच्छक्तेर्वा नानात्वाज्जीवनानात्वं अजामित्येक । वचनं तुजात्यभिप्रायकं नचकार्योपाधिरयंजीव इतिवाक्यविरोधः समाहितत्वात्। 'स्वमपीतो भवति'इति श्रुतिस्तु तदानीमंतःकरणलये कर्तृत्वाद्यभावादुपपन्ना गत्यादिकमप्यतिवाहिकशरीरगमनादिप्रयुक्तमि-त्यविरोधः तस्योपाधिगतावस्थावत्वमाह ( सचेति ) तुरीयावस्थातू-पाधितादात्म्याध्यासनिवृत्तिकालीना तदुपहितचैतन्यस्य जीवस्य जाग्र-दाद्यवस्थात्रयवत्वं लक्षणमुक्तम्। तत्र जाग्रदवस्थां लक्षयति ( जाग्रदिति ) इन्द्रियजन्यज्ञानयोग्यसमय इत्यर्थः।इन्द्रियजन्येति पदकृत्यमाह (अवस्थां-त्तरइति ) स्वप्नसुषुप्त्यवस्थयोरित्यर्थः । इन्द्रियजन्यज्ञानस्वरूपं किमि-त्याकांक्षायामाह ( इन्द्रियजन्येति ) चैतन्यरूपंज्ञानं कुतो नेत्यत आह ( स्वरूपेति ) ननु स्वरूपज्ञानेनैव सर्वदासिद्धेन विषयप्रकाशसिद्धौ तज्ज-न्यावृत्तिः किमर्थंत्यत आह ( साचेति ) ॥ ३१ ॥

तथाहि अविद्योपहितचैतन्यस्य जीवत्वपक्षे घटाद्य धिष्ठानचैतन्यस्य जीवरूपतया जीवस्य सर्वदाघटा दिभानप्रसक्तौ घटाद्यवच्छिन्नचैतन्यावरकमज्ञानं मूलाविद्यापरतंत्रमवस्थापदवाच्यमभ्युपगन्तव्यम्। एवं सति घटादेर्नसर्वदाभानप्रसंगः, अनावृतचैतन्य संबंधस्यैव भानप्रयोजकत्वात् तस्यचावरणस्य सदा

तनत्वे कदाचिदपिघटभानं न स्यादिति तद्भंगे वक्त
व्ये तद्भंगजनकं न चैतन्यमात्रं, तद्भासकस्य तदनि
वर्तकत्वात् । नापि वृत्त्युपहितचैतन्यं परोक्षस्थलेपि
तन्निवृत्त्यापत्तेरिति परोक्षवृत्तिव्यावृत्तवृत्तिविशेषस्य
तदुपहितचैतन्यस्य वाऽऽवरणभंगजनकत्वमित्यावर
णाभिभवार्था वृत्तिरित्युच्यते ॥

नन्वावरणभंगोपि चैतन्येनैव भविष्यतीत्याशंक्याह ( तथाहीति ) आविद्योपहितस्य तत्प्रतिबिंबस्य तदवच्छिन्नस्य वासर्वदाभानप्रसक्ति-वारणायावरणरूपमूलाज्ञानशक्तिविशेषस्यावश्यकत्वे तद्भंगंविना कदापि भानं नस्यादतस्तद्भंग आवश्यक इत्यर्थः । आवरणभंगोपि चैतन्येने-त्यत्र किंचैतन्यमात्रेण किंवोपहितचैतन्येनेति विकल्प्याद्यं प्रत्याह ( नेति ) तद्भासकस्य तत्सत्तास्फूर्तिप्रदस्य तन्निवर्तिकत्वे कदाप्यावर-णस्यावस्थानं नस्यादेतेन तृणादिप्रकाशकस्याप्यग्नेस्तन्नाशकत्वदर्शनान्न भासकत्वाविवर्तकत्वयोर्विरोध इति प्रत्युक्तं वह्नेस्तृणादेः सत्तास्फूर्तिप्रदत्व रूपभासकत्वाभावात् । द्वितीयं निरस्यति ( नापीति ) वृत्तिविशेषस्य घटाद्याकारायास्तत्तद्वृत्तेः वृत्तेर्जडत्वात्कथं तयावरणनिवृत्तिरितिचेत्तत्राह ( तदुपहितेति ) तादृशवृत्तेरभिव्यंजिकाया आवश्यकत्वेन वृत्तिरेवतथे-त्याह ( इतीति ) ॥

संबंधार्थावृत्तिरित्यपरं मतम् । तत्राविद्योपाधिको
ऽपरिच्छिन्नो जीवः । स च घटादिप्रदेशे विद्यमानोपि
घटाद्याकारापरोक्षवृत्तिविरहदशायां न घटादिकम
वभासयति, घटादिनातस्य संबंधाभावात् । तदाका
रवृत्तिदशायां तु भासयति तदा संबंधसत्त्वात् ॥

इत्येकंमतमित्युक्तिसूचितम्। द्वितीयं मतं दर्शयति(संबंधार्थेति) तत्र तस्मिन्मते अविद्योपाधिकोऽपरिच्छिन्नो जीव इतिमत इत्यर्थः॥

**नन्वविद्योपाधिकस्यापरिच्छिन्नस्य जीवस्य स्वत एव समस्तवस्तुसंबंधस्य वृत्तिविरहदशायां संबंधाभावाभिधानमसंगतम्। असंगत्वदृष्ट्याऽसंबंधाभावाभिधाने वृत्त्यनंतरमपि संबंधोन स्यादितिचेत्, उच्यते। नहि वृत्तिविरहदशायां जीवस्य घटादिना सह संबंधसामान्यं निषेधामः। किं तर्हि घटादिभानप्रयोजकं संबंधविशेषं स च संबंधविशेषो विषयस्य जीवचैतन्यस्य व्यंग्यव्यंजकतालक्षणः कादाचित्कः तत्तदाकारवृत्तिनिबंधनः॥**

ननु संबंधाभावः संबंधप्रयोजकाभावादुच्यते किंवात्मनोऽसंगतत्वात्। नाद्यः,परिच्छेदशून्यस्य घटादिसंबंधे प्रयोजकाकांक्षाभावात्। न,द्वितीयः, वृत्त्यनंतरमपि तस्य दुर्घटत्वादिति शंकते ( नन्विति। असंगत्वेति ) 'असंगो नहि सज्जते' इतिश्रुत्युक्तपारमार्थिकासंगत्वदृष्ट्येत्यर्थः। त्वदापादितसंबंधसामान्यं नास्माकं निषेध्यमतो नास्मदुक्तिरसंगतेत्याह ( नहीति ) पृच्छति ( किंतर्हीति ) उत्तरमाह ( घटादीति ) निषेधाम इत्यनुषज्यते।ननु सचसंबंधः संयोगः समवायो वा। नाद्यः,अपरिच्छिन्ने जीवे घटादेः सर्वदा संयुक्तत्वेन सर्वदाभानप्रसंगात्। नद्वितीयः, अनंगीकारादंगीकारेच तस्य नित्यत्वेनोक्तदोषादित्याशंक्याह ( सचेति ) घटाद्याकारवृत्तिसमये तदुपहितजीवचैतन्यस्य व्यंग्यत्वं तद्विषयस्य घटादेर्व्यंजकत्वमिति तादृशवृत्तिरेव तत्रकारणमित्यर्थः॥

**तथाहि तैजसमन्तःकरणं स्वच्छद्रव्यत्वात् स्वत एव जीवचैतन्याभिव्यंजनसमर्थं घटादिकं तु न तथा**

अस्वच्छद्रव्यत्वात् । स्वाकारवृत्तिसंयोगदशायां तु वृत्त्यभिभूतजाड्यधर्मकतया वृत्त्युत्पादितचैतन्याभिव्यंजनयोग्यताश्रयतया च वृत्त्युत्थानानंतरं चैतन्यमभिव्यनक्ति ॥

ननु घटादेरस्वच्छस्य स्वाकारवृत्तिदशायामपिकथमभिव्यंजकत्वमित्यपेक्षायामाह ( तथाहीति ) न तथा स्वतः जीवचैतन्याभिव्यंजनसमर्थं न भवति । कथं तर्हि तत्समर्थमित्यत्राह ( स्वाकारेति ) वृत्त्या अभिभूतस्तिरस्कृतो जाड्यधर्मो यस्यतत्तथा वृत्त्या उत्पादितायाचैतन्याभिव्यंजनयोग्यता तदाश्रयतयाचेत्यर्थः । अभिव्यनक्ति घटादिकमितिकर्तृपदमनुषज्यते ॥

तदुक्तं विवरणे–अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपिघटादौ चैतन्याभिव्यक्तियोग्यतामापादयतीति । दृष्टंचास्वच्छद्रव्यस्यापि स्वच्छद्रव्यसंबंधदशायां प्रतिबिंबग्राहित्वम् । यथा कुड्यादेर्जलादिसंयोगदशायां मुखादिप्रतिबिंबग्राहिता घटादेरभिव्यंजकत्वं च तत्प्रतिबिंबग्राहित्वं चैतन्याभिव्यक्तत्वं च तत्र प्रतिबिंबितत्वम् ॥

तत्र संमतिमाह ( तदुक्तमिति ) नन्वस्वच्छद्रव्यस्य प्रतिबिंबग्राहित्वं नदृष्टचरमित्याशंक्याह ( दृष्टंचेति ) ननु घटादेरस्वच्छद्रव्यस्य चैतन्याभिव्यंजकत्वदृष्टांतस्य वक्तव्यत्वे प्रतिबिंबग्राहिकुड्यादिनिदर्शनप्रदानमसंगतमित्याशंक्याह ( घटादेरिति ) ॥

एवंविधाभिव्यंजकत्वसिद्ध्यर्थमेव वृत्तेरपरोक्षस्थले बहिर्निर्गमनांगीकारः।परोक्षस्थलेतु वह्न्यादेर्वृत्तिसंस

र्गाभावेन चैतन्यानभिव्यंजकतया न वह्न्यादेरपरो क्षत्वम् । एतन्मते च विषयाणामपरोक्षत्वं चैतन्या भिव्यंजकत्वमिति द्रष्टव्यम् । एवं जीवस्यापरिच्छि न्नत्वेपि वृत्तेः संबंधार्थत्वं निरूपितम् ॥

इदं च वृत्तिं विना न सिद्ध्यतीति तादृशसंबंधप्रयोजकता तस्या इत्याह ( एवमिति ) ननु वृत्तेरेवंविधसंबंधार्थत्वाभ्युपगमे कथं घटा- देरपरोक्षत्वं विषयस्य प्रमातृचैतन्याभिन्नत्वमपरोक्षत्वमित्युक्तत्वादित्या- शंक्याह ( एतन्मतइति ) इदमुपसंहरन्मतांतरं संबंधार्थत्वोपपादनं प्रति- जानीते ( एवमिति ) ॥

इदानीं परिच्छिन्नत्वपक्षे संबंधार्थकत्वं निरूप्यते ॥ तथाहि अन्तःकरणोपाधिको जीवः तस्य न घटाद्यु पादानता घटादिदेशासंबंधात् किंतु ब्रह्मैव घटाद्युपा दानं तस्य मायोपहितस्य सकलघटाद्यन्वयित्वात् । अत एव ब्रह्मणः सर्वज्ञता । तथाच जीवस्य घटाद्य धिष्ठानं ब्रह्मचैतन्याभेदमंतरेण घटाद्यवभासासंभवे प्राप्ते तदवभासाय घटाद्यधिष्ठानब्रह्मचैतन्याभेदसि द्ध्यर्थं घटाद्याकारावृत्तिरिष्यते ॥

अंतःकरणोपाधिकस्तत्प्रतिबिंबस्तदवच्छिन्नो वा तर्ह्यस्मिन्मते घटाद्युपादानं किमिति पृच्छति ( किंत्विति ) उत्तरमाह ( ब्रह्मैवेत्ति ) ननु तस्यव्यापकत्वेपि केवलस्यासंगितयाकथं घटादिदेशसंबंध इत्या- शंक्य केवलस्य तदसंभवेपि मायोपाधिकस्य मायाद्वारकसंबंधसंभवा- दित्याह ( तस्येति ) मायोपहितस्य तदवच्छिन्नस्य तत्प्रतिबिंबस्य वाताद्बिम्बस्य वा एतेन प्रकृतेकिमायातमित्यत आह (तथाचेति) अंतः-

करणोपाधिकचैतन्यस्य घटादिदेशानवस्थितस्य तदधिष्ठानचैतन्याभिन्नत्वाभावे ॥

**ननु वृत्त्यापि कथं प्रमातृचैतन्यविषयचैतन्योरभेदः संपाद्यते घटान्तःकरणरूपोपाधिभेदेन तदवच्छिन्नचैतन्ययोरभेदासंभवादितिचेन्न । वृत्तेर्बहिर्देशनिर्गमनांगीकारेण वृत्त्यन्तःकरणविषयाणामेकदेशस्थत्वेन तदुपधेयभेदाभावस्योक्तत्वात् । एवमपरोक्षस्थले वृत्तेर्मतभेदेन विनियोग उपपादितः ॥**

उक्तं विस्मृत्यशंकते ( नन्विति ) प्रोक्तं स्मारयति ( वृत्तेरिति ) वृत्तिविनियोगोपपादनमुपसंहरति ( एवमिति ) ॥

**इन्द्रियाजन्यविषयगोचरापरोक्षान्तःकरणवृत्त्यवस्था स्वप्नावस्था जाग्रदवस्थाव्यावृत्त्यर्थं इन्द्रियाजन्येति । अविद्यावृत्तिमत्त्यां सुषुप्तौ अतिव्याप्तिवारणायान्तःकरणेति, सुषुप्तिर्नामाविद्या गोचराविद्यावृत्त्यवस्था जाग्रत्स्वप्नयोरविद्याकारवृत्तेरन्तःकरणवृत्तित्वान्न तत्रातिव्याप्तिः । अत्र केचिन्मरणमूर्छयोरवस्थान्तरत्वमाहुः । अपरेतु सुषुप्तावेवतयोरंतर्भावमाहुः ॥**

अथ स्वप्नावस्थां लक्षयति ( इन्द्रियेति ) इन्द्रियाजन्याविषयगोचरा अंतःकरणवृत्तिर्यस्मिन्समये सा तथाभूतवृत्त्यवस्था सुषुप्तिं लक्षयति ( सुषुप्तिरिति ) अविद्याऽज्ञानं सागोचरो विषयो यस्याः साक्षादविद्यावृत्तेस्तदवस्था अविद्यापदं नित्यसुखस्याप्युपलक्षणम् । ननु मरणमूर्छयोरपिनिरूपणीयत्वात्किमित्यवस्थात्रयमेवनिरूपितमित्याशंक्याह ( अत्रेति ) ॥

**तत्र तयोरवस्थात्रयान्तर्भावबहिर्भावयोस्त्वंपदार्थ निरूपणे उपयोगाभावान्न तत्र प्रयत्यते । तस्य च मायोपाध्यपेक्षयैकत्वं अन्तःकरणोपाध्यपेक्षया च नानात्वं व्यवह्रियते।एतेन जीवस्याणुत्वं प्रत्युक्तम् । "बुद्धेर्गुणेनात्मगुणेन चैव ह्याराग्रमात्रोह्यवरोपि दृष्टः" इत्यादौ जीवस्य बुद्धिशब्दवाच्यान्तःकरणपरिमा णोपाधिकपरमाणुत्वश्रवणात् ॥**

अवस्थानिरूपणप्रसंगेभवत्संमतंकिमित्यपेक्षायामाह (तत्रेति ) तयोमर्त-योरित्यर्थः । अवस्थात्रयवाञ्जीव इत्युक्तं तत्रावस्थास्वरूपमभिधाय तद्वा-न्जीव एक उतानेक इत्यपेक्षायामाह ( तस्येति ) तस्योक्तावस्थावतोजी-वस्य तथाचविभुर्मध्यमपरिमाणो वा जीव इत्यर्थः। एतेन—जीवस्य विभु-त्वादिप्रदर्शनेनअणुत्वं—रामानुजाद्युक्तं, ननु "वालाग्रशतभागस्य शतधा कल्पितस्य च ॥ जीवो भागः स विज्ञेयः सचानंत्याय कल्प्यते" इत्यादि-श्रुतिविरोधस्स्यादित्याशंक्य "महतो महीयानित्यादिश्रुत्या सर्वांगीण-सुखाद्युपलब्ध्यां च शुद्धस्य दुर्लक्ष्यत्वाभिप्रायमेवाणुत्वं सोपाधिकस्य त्वंतःकरणवृत्त्युपाधिकृतमित्यविरोध इत्याशयेनाह ( बुद्धेरिति ) ॥

**सच जीवः स्वयं प्रकाशः स्वप्नावस्थामधिकृत्य "अत्रायं पुरुषः स्वयं ज्योतिः" इति श्रुतेः । अनु भवरूपश्च 'प्रज्ञानघनः' इत्यादि श्रुतेः । अनुभवा मीति व्यवहारस्तु वृत्तिप्रतिबिंबचैतन्यमादायोपपद्यते ॥**

नैयायिकादिमतनिरासायाह ( सचेति ) तत्रबृहदारण्यकश्रुतिंप्रमाण-यति ( स्वप्नावस्थामिति ) अयं पुरुषइत्यनेन परमात्माभिहित इति भ्रमव्यवच्छेदार्थमुक्तम्,स्वप्नेति। वृत्त्यादिवज्जडत्वमाशंक्याह ( अनुभव-

रूपश्चेति ) अत्रापि प्रमाणमाह ( प्रज्ञानेति ) विज्ञानमूर्तिरित्यर्थः । 'योऽयं विज्ञानघनः' इत्यादिश्रुतिरादिपदादेया । आत्मनः स्वप्रकाशत्वं ज्ञानरूपत्वं च साधितमाद्यपद्यविवरणे । ननु तस्यानुभवरूपत्वेऽनुभवामीत्यनुभवाश्रयत्वव्यपदेशानुपपत्तिरित्याशंक्याह (अनुभवामीति ) ॥

**एवं त्वंपदार्थो निरूपितः अधुना तत्त्वंपदार्थयोरैक्यं महावाक्यप्रतिपाद्यमभिधीयते ॥**

त्वंपदार्थनिरूपणमुपसंहरन्नखंडार्थप्रतिपादनं प्रतिजानीते ( एवमिति ) ॥

**ननु नाहमीश्वर इत्यादिप्रत्यक्षेण किंचिज्ज्ञत्वसर्वज्ञत्वविरुद्धधर्माश्रयत्वादिलिंगेन द्वासुपर्णेत्यादि श्रुत्या**

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥**

**इत्यादिस्मृत्या च जीवपरभेदस्यावगतत्वेन तत्त्वमस्यादि वाक्यमादित्यो यूपो यजमानः प्रस्तर इत्यादिवाक्यवत् उपचरितार्थमेवेति चेत् ॥**

'प्रज्ञानं ब्रह्म' 'अहंब्रह्मास्मि' 'तत्त्वमसि' 'अयमात्माब्रह्म' इत्येवंरूपैर्ऋग्वेदादिमहावाक्यैर्महत्त्वं तु "सत्यं ज्ञानमनंतं ब्रह्म" इत्याद्यवांतरवाक्यापेक्षया प्रतिपाद्यं तात्पर्यविषयत्वेन बोधनीयं तत्प्रतिपादनार्थमादौ शंकामुद्भावयति ( नन्विति ) आदिपदेन दुःख्यहंसंसार्यहमित्यादिप्रत्यक्षं ग्राह्यं तत्त्वं पदार्थौ न परस्पराभिन्नौ विरुद्धधर्माश्रयत्वाद्विरुद्धस्वभावत्वाच्च तेजस्तिमिरवत् । "द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते॥ तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" "ऋतं पिबंतौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ॥ छायातपौ ब्रह्मविदो वदंति पंचाग्नयो येचत्रिणाचिकेता" "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" सत्यं भेदं विनाऽनुपपद्यमानमुपलभ्यमानं जीवस्य संसारित्वं श्रूयमाणं

चेश्वरस्यासंसारित्वम् सत्यं भेदं कल्पयति; यदि जीवस्य परमात्मनाऽभेदः स्यात् तर्ह्युपलभ्येत नोपलभ्यतेऽतोनास्तीति निश्चीयत इतिप्रत्यक्षादि प्रमाणैर्जीवेश्वरभेदस्यावगतत्वात्तत्त्वमस्यादि वाक्यमुपचरितार्थं गौणार्थ- मेवादित्योयूपः यजमानः प्रस्तर इत्यादिवाक्यवत् । यथाऽनादित्येयूपे आदित्यत्वस्यायजमानभूतायां दर्भमुष्टौच यजमानत्वस्योपचारस्तद्व- दित्यर्थः ॥

**नाभेदप्रत्यक्षस्य संभावितकरणदोषस्यासंभावितदोष वेदजन्यज्ञानेन बाध्यमानत्वात् । अन्यथा चंद्रगता धिकपरिमाणग्राहिज्योतिःशास्त्रस्य चंद्रप्रादेशग्राहि प्रत्यक्षेण बाधापत्तेः । पाकरक्ते घटे रक्तोऽयं न श्याम इतिवत्सविशेषणेहीति[1] न्यायेन जीवपरभेदग्रा हिप्रत्यक्षस्य विशेषणभूतधर्मभेदविषयत्वाच्च ॥**

व्यावहारिकभेदावेदकप्रत्यक्षादिप्रमाणैस्तात्त्विकाभेदावेदकश्रुतिविरो धायोगान्नैवमित्याह ( नेति ) स्याद्विरोधस्तथापि श्रुत्याप्रत्यक्षादेर्बाध इत्याशयेनादौ प्रत्यक्षस्य बाध्यत्वयोग्यतामाह ( भेदेति ) संभाविताः करणानामिन्द्रियाणामपाटवत्वादयोदोषा यस्मिन्सतथातस्येत्यर्थः । ननु ज्येष्ठेन प्रत्यक्षेणैव तद्बाध उचित इत्याशंक्य ज्येष्ठत्वं हि बाध्यत्वेहेतुर्न तुबाधतायां कनीयसाशुक्तिज्ञानेन ज्येष्ठस्य रजतज्ञानस्य बाधदर्शनात्। अन्यथा तदुत्पत्त्यसंभवाच्चंद्रादिपरिमाणग्राहि शास्त्रबाधापत्तेश्चेत्याशयेना ह (अन्यथेति) नचोपजीव्यविरोधः धर्मभेदबोधकप्रत्यक्षस्य धर्म्यभेदज्ञानं प्रत्यनुपजीव्यत्वादित्याशयेनाह ( पाकेति ) तथाचैवंभूतज्ञाने सत्यपि धर्म्यभेदमादायसोयंघट इतिज्ञानं यथाऽविरुद्धं तद्वन्नाहमीश्वर इतिज्ञाना- नंतरमहंब्रह्मेतिज्ञानमित्यर्थः ॥

**अत एव च नानुमानमपि प्रमाणं आगमबाधात,**

---

१ सविशेषणेहिविधिनिषेधौविशेषणमुपसंक्रामतः सतिविशेष्यबाध ।

मेरुपाषाणमयत्वानुमानवत् । नाप्यागमांतरविरोधः तत्परातत्परवाक्ययोः तत्परवाक्यस्य बलवत्त्वेन लोकसिद्धभेदानुवादि द्वासुपर्णादिवाक्यापेक्षया उपक्रमोपसंहाराद्यवगताद्वैततात्पर्यविशिष्टस्य तत्त्वमस्यादिवाक्यस्य प्रबलत्वात् ॥

यतः सर्वप्रमाणोपजीव्यस्य ज्येष्ठस्य प्रत्यक्षस्य बाध्यत्वाद्भेदेऽप्रमाणता अतएवानुमानस्यापीत्याह ( अतएवेति ) आगमेन तत्त्वमस्यादिना बाधात् । मेरुःपाषाणमयः पर्वतत्वाद्विंध्यादिवदित्याद्यनुमानं यथासर्वतः सौवर्णः कुलगिरिराजोमेरुरित्याद्यागमेनबाधितंतद्वदित्यर्थः । आगमविरोधोपिनास्तीत्याह ( नापीति ) भेदस्य प्रत्यक्षादिप्रमाणैर्ज्ञाततत्वाच्छास्त्रस्य वा ज्ञातज्ञापकत्वाद्भेदवाद्यागमस्य तत्रतात्पर्याभावेनातत्परत्वात्तत्पराभेदवाद्यागमाद्दौर्बल्यादित्याह ( तत्परेति ) ॥

नचजीवपरैक्ये विरुद्धधर्माश्रयत्वानुपपत्तिः, शीतस्यैव जलस्यौपाधिकौष्ण्याश्रयत्ववत् स्वभावतो निर्गुणस्यैव जीवस्यान्तःकरणाद्युपाधिककर्तृत्वाद्याश्रयत्वप्रतिभासोपपत्तेः । यदि च जलादौ औष्ण्यमारोपितं तदा प्रकृतेऽपि तुल्यम् । नच सिद्धान्ते कर्तृत्वस्य क्वचिदप्यभावादारोप्यप्रमाहितसंस्काराभावे कथमारोप इतिवाच्यम्, लाघवेनारोप्यविषयसंस्कारत्वेनैव तस्य हेतुत्वात् ॥

नचार्थापत्तिविरोध इत्याह (नचेति) औपाधिकविरुद्धधर्माश्रयत्वेनान्यथासिद्धत्वादित्याह ( शीतस्यैवेति ) नन्वग्निधर्मस्यौष्ण्यस्य जलादावारोपात्प्रतीतिरत्र कस्य धर्मस्येत्याशंक्याह ( यदीति ) अन्तःकरणधर्मस्य कर्तृत्वादेर्भानसंभवात्प्रकृतेप्येतत्तुल्यमित्यर्थः । नन्वात्मतादा-

त्म्यापन्नस्यैवांतःकरणस्यापि कर्तृत्वादिधर्मकत्वात्। तद्व्यतिरिक्ते ऽनात्मनिक्वापिकर्तृत्वादेरप्रमितत्वात्कथमारोप इत्याशंक्य परिहरति ( नचेति ) यथासूर्यादिकिरणसंपर्कात्प्रतीयमानमपि तलादिकं घटादिनिष्ठं नतुसूर्यादिनिष्ठं, तथात्मसंबंधात्प्रतीयमानमपि कर्तृत्वादिकमंतःकरणनिष्ठमेव, नत्वात्मनिष्ठम्, तस्य कूटस्थत्वात्ततःपृथक्क्वाप्यप्रमितस्यकर्तृत्वादेरात्मन्यारोपेनास्तिबाधकम्, तत्रारोप्यगोचरसंस्कारमात्रस्यैव हेतुत्वादित्याह ( लाघवेनेति ) ॥

**नच प्राथमिकारोपे कागतिः, कर्तृत्वाद्यध्यासप्रवाहस्यानादित्वात्। तत्त्वंपदवाच्ययोर्विशिष्टयोरैक्यायोगेपि लक्ष्यस्वरूपयोरैक्यमुपपादितमेव। अत एव तत्प्रतिपादकतत्त्वमस्यादिवाक्यानामखंडार्थत्वं, सोयमित्यादिवाक्यवत्। नच कार्यपराणामेव प्रामाण्यं, चैत्रपुत्रस्ते जात इत्यादौ सिद्धेपि संगतिग्रहात्। एवं सर्वप्रमाणाविरुद्धं श्रुतिस्मृतीतिहासपुराणप्रतिपाद्यं जीवपरैक्यं वेदान्तशास्त्रस्य विषय इति सिद्धम् ॥**

**॥ इति श्रीवेदांतपरिभाषायां विषयपरिच्छेदः ॥ ७ ॥**

नन्वस्त्वस्मिन्कर्तृत्वारोपे पूर्वप्रतीतकर्तृत्वादिसंस्कारोहेतुस्तत्रापि तथाभूतस्तत्रापि तथाभूतस्तथापि प्राथमिकारोपोदुर्घट इत्याशंक्य परिहरति ( नचेति ) प्राथमिकारोपेकापिगतिर्नास्तीति नचेत्यर्थः। कर्तृत्वाद्यध्यासप्रवाहस्यानादित्वेन कस्याप्यारोपस्य प्राथम्यासिद्ध्या तत्रपृथग्गतेरवक्तव्यत्वादित्याह ( कर्तृत्वेति ) नन्वस्त्वेवं तथापिकथं विरुद्धधर्माक्रांतयोर्जीवेश्वरयोरैक्यमित्याशंक्याह ( तत्त्वमिति ) यतोलक्ष्यस्वरूपैक्यमत एव सोऽयं देवदत्तः प्रकृष्टप्रकाशश्चन्द्र इत्यादिवाक्यवत् 'तत्त्वमसि' 'सत्यं

ज्ञानमनंतम्' इत्यादिवाक्यानामखंडार्थत्वमिति । नचास्त्यनुपलब्धिविरोध-स्तमसावृतस्य घटस्यानुपलब्धेस्तदभावानिश्चायकत्ववदज्ञानवताऽभेदस्या-अनुपलंभस्य तदभावानिर्णायकत्वादित्यपि द्रष्टव्यम् । ननु सिद्धे प्रयो-जकप्रवृत्त्यादेरभावात्संगतिग्रहायोगात्क्रियान्वितस्वार्थपराणामेवप्रामा-ण्यान्नसिद्धं ब्रह्मवेदांतप्रमेयमिति प्रभाकरमतमाशंक्य परिहरति ( नचे-ति ) पुत्रपदांकितवसनं चैत्रपुरतोनिधाय हेचैत्रपुत्रस्तेजात इत्युक्ते वि-कसितवदनकमलं चैत्रमवलोक्यास्य पुत्रपदस्य सुतरूपेऽर्थेसंगतिं तट-स्थो गृह्णातीति पुत्रस्तेजातः कन्यातेगर्भिणी इत्यादौ संगतिग्रहादि-त्यर्थः । उपसंहरति ( एवमिति ) उक्तप्रकारेणसर्वैः प्रत्यक्षादिप्रमाणैरवि-रुद्धं तत्र "कोमोहःकः शोक एकत्वमनुपश्यतः" इत्यादिश्रुतिभिः "क्षेत्रज्ञं-चापि मांविद्धि सर्वक्षेत्रेषु भारत" इत्यादिस्मृतिभिः सर्वभूतांतरस्थायनि-त्यशुद्धचिदात्मने प्रत्यक्चैतन्यरूपाय मह्यमेवनमो नमः इत्यादीतिहासैः 'विभेदजनकेऽज्ञाने नाशमात्यंतिकं गते' आत्मनोब्रह्मणोभेदमसंतंकः करिष्यति इत्यादिपुराणैश्चतात्पर्यतयाप्रतिपाद्यम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्य्यबालगोपालतीर्थश्रीपादशिष्यदत्त-वंशावतंसरामकुमारसूनुधनपतिसूरिसुताशिवदत्तविरचितायांप-रिभाषार्थदीपिकायांविषयपरिच्छेदःसमाप्तः ॥ ७ ॥

---

## अथ प्रयोजनपरिच्छेदः ८.

**इदानीं प्रयोजनंनिरूप्यते ॥**

अथ प्रयोजननिरूपणं प्रतिजानीते ( इदानीमिति ) ॥

**यदवगतं सत्स्ववृत्तितयेष्यते तत्प्रयोजनम् । तच्च द्वि-विधं, मुख्यंगौणंचेति । तत्र सुखदुःखाभावौ मुख्यं प्रयो-जनम् । तदन्यतरसाधनं गौणं प्रयोजनम् । सुखं च द्विविधं, सातिशयं निरतिशयंचेति । तत्र सातिशयं सुखं विषयानुषंगजनितान्तःकरणवृत्तितारतम्यकृता**

नंदलेशाविर्भावविशेषः । "एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति" इत्यादिश्रुतेः । निरतिशयं सुखंच ब्रह्मैव । "आनंदो ब्रह्मेति व्यजानात्" "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः ॥

यज्ज्ञातं सन्ममेदं स्यादितिस्वसंबंधितयेष्यते तत्प्रयोजनं, तद्विभजति ( तच्चेति ) तत्रतयोर्द्वयोर्मध्ये तदन्यतरसाधनं तयोः सुखदुःखाभावयोरन्यतरस्य सुखस्य दुःखाभावस्य वा साधनंसुखादिरूपप्रयोजनगुणत्वाद्गौणं सुखस्यापि द्वैविध्यमाह ( सुखंचेति ) उपलक्षणमेतत् ।दुःखाभावोपिद्विविधः, यत्किंचिद्दुःखाभावो यावद्दुःखाभावश्चेति । तत्रसंसारदशायामाद्यो मोक्षावस्थायां द्वितीय इत्यपिबोध्यं ( विषयेति ) विषयतारतम्याद्विषयेन्द्रियसन्निकर्षजनितांतःकरणवृत्तितारतम्यं तत्कृतानंदलेशाविर्भावविशेषस्तथाभूतवृत्त्याविषयावच्छिन्नाज्ञाननिवृत्तौतदवच्छिन्नानंदस्यैव प्रतिबिंबनादानंदसमुद्रस्य ब्राह्मण आनंदलेशाविर्भावविशेष इत्यथः । अत्रश्रुतिं प्रमाणयति ( एतस्यैवेति ) आदिपदेन " एष ह्येवानंदयति " इत्याद्याश्रुतिरुपादेया । द्वितीयं सुखं लक्षयति ( निरतिशयसुखमिति ) चकारात्सातिशयसुखमप्यानंदात्मब्रह्मलेशात्मकत्वात् ब्रह्मैवेत्यर्थः । अत्रापिश्रुतिं प्रमाणयति ( आनंदइति ) ॥

आनंदात्मकब्रह्मावाप्तिश्च मोक्षः, "शोकनिवृत्तिश्च ब्रह्म वेदब्रह्मैवभवति" इति "तरतिशोकमात्मवित्" इत्यादिश्रुतेः । नतु लोकांतरावाप्तिः, तज्जन्यवैषयिकानंदो वा मोक्षः, तस्य कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्त्यापत्तेः ॥

भवत्वानंदात्मकं ब्रह्म प्रकृते किमायातमित्याशंक्याऽऽनंदरूपब्रह्मावाप्तिः समूलसर्वानर्थनिवृत्तिश्च मोक्ष इत्यवगतोमोक्षः सममभूयादितिं

स्ववृत्तितयेष्यते इति तस्य प्रयोजनत्वमित्याह ( आनंदेति ) शोकशब्दः सकारणबंधपरः । उभयत्र प्रमाणमाह ( ब्रह्मवेदेति ) तरति अपनयति आदिपदेन ब्रह्मविदाप्नोति परंतरत्यविद्यामित्याद्याश्रुतिरादेया। तांत्रिकमतनिरासायाह ( नन्विति ) तस्याः स्वतः पुरुषार्थत्वाभावादाह ( तज्जन्येति ) तयालोकांतरावाप्त्याजन्येत्यर्थः । उभयोर्मोक्षत्वाभावेहेतुमाह ( तस्येति ) उभयविधमोक्षस्य ॥

**ननु त्वन्मतेप्यानंदावाप्तेरनर्थनिवृत्तेश्च सादित्वेतुल्यो दोषः, अनादित्वे मोक्षमुद्दिश्य श्रवणादौ प्रवृत्त्यनुपपत्तिरितिचेत्, न, सिद्धस्यैव ब्रह्मस्वरूपस्य मोक्षस्यासिद्धत्वभ्रमेण तत्साधने प्रवृत्त्युपपत्तेः।अनर्थनिवृत्तिरप्यधिष्ठानभूतब्रह्मस्वरूपतया सिद्धैव।लोकेपि प्राप्तप्राप्तिपरिहृतपरिहारयोः प्रयोजनत्वं दृष्टमेव ॥**

ननु त्वदभिमतो मोक्षः सादिरनादिर्वा । आद्ये कृतकत्वेनानित्यत्वे मुक्तस्य पुनरावृत्तिलक्षणोदोषस्तुल्यः। द्वितीये श्रवणादिवैयर्थ्यमिति तांत्रिकः शंकते ( नन्विति ) द्वितीयपक्षमवलंब्य परिहरति ( नेति ) नन्वानंदरूपस्य ब्रह्मणः सिद्धत्वेन तत्प्राप्तेस्तथात्वेप्यनर्थनिवृत्तेरभावरूपायाः कथं सिद्धत्वमित्याशंक्याह ( अनर्थनिवृत्तिरपीति ) ननु सिद्धस्य पुरुषार्थत्वादर्शनादेवंविधस्य मोक्षस्य पुरुषार्थतानभविष्यतीत्याशंक्याह ( लोकेपीति ) ॥

**यथाहस्तगतविस्मृतसुवर्णादौ तव हस्ते सुवर्णमित्याप्तोपदेशादप्राप्तमिव प्राप्नोति । यथावा वलयितचरणायां रज्जौ सर्पत्वभ्रमवतो नायं सर्प इत्याप्तवाक्यात् परिहृतस्यैव सर्पस्य परिहारः । एवं प्राप्तस्याप्यानंदस्य प्राप्तिः परिहृतस्याप्यनर्थस्य निवृत्तिः मोक्षः प्रयोजनम् ॥**

क्षेत्यपेक्षायामुदाहरति ( यथेति ) दृष्टांतोक्तं प्रकृते योजयति ( एवमिति ) ॥

**स च ज्ञानैकसाध्यः "तमेव विदित्वाऽतिमृत्युमेति नान्यः पंथाविद्यतेऽयनाय" इति श्रुतेः। अज्ञाननिवृत्तेर्ज्ञानैकसाध्यत्वनियमाच्च। तच्च ज्ञानं ब्रह्मात्मैक्य गोचरम्। "अभयं वै जनकप्राप्तोसि तदात्मानमेवावेदहं ब्रह्मास्मि" इतिश्रुतेः। "तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्" इति नारदीयवचनाच्च ॥**

सच मोक्षः किं कर्मसाध्यः,किंवोपासनासाध्यः,आहोस्विदेतत्समुच्चय-साध्यः, उतकर्मज्ञानसमुच्चयसाध्यः, किंवोपासनाज्ञानसमुच्चयसाध्यः किंवाकेवलज्ञानलभ्य इति विचिकित्सायां स च ब्रह्मज्ञानादिति प्रतिज्ञातमुपपादयति ( सचेति ) तमेवात्मानमेवविदित्वातंविदित्वैवेतिवा मृत्युं जन्ममरणलक्षणां संसृतिमत्येति अतिक्रामति। अन्यः कर्मादि-रूपोऽयनायमोक्षायपंथामार्गोनविद्यते। "हिरण्यदा अमृतत्वं भजंते" इत्यादिश्रुतेः। कर्मसाध्यस्वर्गफलस्य प्रलयपर्यंतस्थायित्वाभिप्रायत्वादितरवा-क्यानामपिपरंपरयाकर्मादेर्मोक्षसाधनत्वाभिप्रायत्वाच्चेतिभावः। मुक्तिम-प्याह(अज्ञाननिवृत्तेरिति)ननु तज्ज्ञानंभेदविषयंतत्साधनंकिंवाभेदगोचरमितिविचिकित्सायामाह ( तच्चेति ) तत्रश्रुतिं प्रमाणयति ( अभयमिति ) स्मृतिं प्रमाणयति ( तत्त्वमस्यादीति ) ॥

**तच्च ज्ञानमपरोक्षरूपं परोक्षत्वेऽपरोक्षभ्रमनिवर्तकत्वानुपपत्तेः। तच्चापरोक्षज्ञानं तत्त्वमस्यादिवाक्यादितिकेचित्। मनननिदिध्यासनसंस्कृतान्तःकरणादेवेत्यपरे। तत्र पूर्वाचार्य्याणामयमाशयः-संविदा**

परोक्ष्यं न करणविशेषोत्पत्तिनिबंधनम्, किन्तु प्रमेयविशेषनिबंधनमित्युपपादितम् ॥

ब्रह्मात्मैक्यगोचरमपि तज्ज्ञानं परोक्षमपरोक्षं वेति विचिकित्सायामाह ( तच्चेति ) तज्ज्ञानं किं वाक्यादुत्पद्यत उतान्तःकरणादितिसंशये पद्मपादाचार्यगदितमाह ( तच्चेति ) वाचस्पतिमिश्रमतमाह ( मननेति ननु कथं वाक्यादपरोक्षज्ञानमित्याशंक्याह (तत्रेति) उपपादितं प्रत्यक्षपरिच्छेदेऽस्माभिरितिशेषः ॥

तथाच ब्रह्मणः प्रमातृजीवाभिन्नतया तद्गोचरं शब्दजन्यज्ञानमप्यपरोक्षं, अत एव प्रतर्दनाधिकरणे प्रतर्दनं प्रति "प्राणोस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्व" इतीन्द्रप्रोक्तवाक्ये प्राणशब्दस्य ब्रह्मपरत्वे निश्चितेसति मामुपास्वेत्यस्मच्छब्दानुपपत्तिमाशंक्य तदुत्तरत्वेन प्रवृत्ते "शास्त्रदृष्ट्यातूपदेशो वामदेववत्" इत्यत्र सूत्रे शास्त्रीया दृष्टिः शास्त्रदृष्टिरिति तत्त्वमस्यादिवाक्यजन्यमहं ब्रह्मेति ज्ञानं दृष्टिशब्देनोक्तमिति ॥

तथाच ज्ञानापरोक्षत्वस्य प्रमेयविशेषनिबंधनत्वे सति सन्निकृष्टविषयं शब्दजन्यमपि ज्ञानमपरोक्षमेवेत्युक्तं, जीवगोचरज्ञानवत्तदभिन्नब्रह्मविषयमपि तदपरोक्षमेवात्र प्रमाणाकांक्षायां "शास्त्रदृष्ट्यातूपदेशो-वामदेववत्" इति सूत्रस्थं भाष्यं प्रमाणमित्याशयेनाह (अतएवेति) शब्दजन्यज्ञानस्यापरोक्षत्वादेवप्रतर्दनाधिकरणे प्राणस्तथानुगमादित्यस्मिन्प्राणोस्मीत्यादियद्विषयवाक्यंतास्मिन्तत्रविषयसंशयपूर्वपक्षसमाधानफलाख्यपंचांगन्यायस्याधिकरणेतिसंज्ञा "प्रतर्दनोहवैदैवोदासिरिंद्रस्य प्रियं-धामोपजगाम युद्धेन च पौरुषेणच" इत्यस्यां कौषीतकिब्राह्मणोपनिषदा

म्नातारव्यायिकायां प्राणोस्मीत्यादिश्रूयमाणं वाक्यं विषयस्तत्र प्राण-शब्देन किंवायुरभिप्रेतः किंवा इन्द्र उत जीव आहोस्वित्परमात्मेति संशयः वाय्वादिरभिप्रेत इतिपूर्वपक्षः। परमात्मेति सिद्धांतः। वाय्वाद्यु-पासनं पूर्वपक्षेफलं परमात्मोपासनमुत्तरपक्षे प्राणः परमात्मा तथानुग-मात्पौर्वापर्यालोचनया वाक्यस्य तत्परत्वावगमादिति प्राणशब्दस्य ब्रह्मपरत्वेनिश्चिते सति मामित्यस्मच्छब्दानुपपत्तिमाशंक्य तदुत्तरत्वेन प्रवृत्ते यथाशास्त्रदृष्ट्याऽहं सूर्योऽभवमहं मनुरिति वामदेवस्य गर्भस्थस्य मुनेरुक्तिस्तथा शास्त्रदृष्ट्यामामितींद्रोपदेशोपीत्यर्थकसूत्रे इत्यर्थः॥

अन्येषां त्वयमाशयः—करणविशेषनिबंधनमेवज्ञाना नां प्रत्यक्षत्वम्, न विषयविशेषनिबंधनम्। एक स्मिन्नेव सूक्ष्मवस्तुनि पटुकरणापटुकरणयोः प्रत्यक्षत्वाप्रत्यक्षत्वव्यवहारदर्शनात्। तथाच संवि त्साक्षात्त्वे इन्द्रियजन्यत्वस्यैव प्रयोजकतया न शब्द जन्यज्ञानस्यापरोक्षत्वम्॥

अथाचार्यवाचस्पतिमिश्राणामाशयमाविष्करोति ( अन्येषामिति ) सूक्ष्मवस्तुनि वर्णादौ इन्द्रियजन्यत्वस्य इन्द्रियत्वेनेन्द्रियजन्यत्वस्यानु-मितिज्ञानस्य मनस्त्वेनतज्जन्यत्वान्नतत्रातिव्याप्तिः। अस्मिन्पक्षे इन्द्रिये-भ्यः पराह्यर्थाइतिश्रुताविन्द्रियेभ्य इत्यस्य बाह्येंद्रियेभ्य इत्यर्थः। मनः सर्वेन्द्रियाणि चेति श्रुतावपि सर्वाणि बाह्येंद्रियाणीत्यर्थः॥

ब्रह्मसाक्षात्कारेपि मनननिदिध्यासनसंस्कृतं मन एव करणं "मनसैवानुद्रष्टव्यः" इत्यादिश्रुतेः। मनोऽग म्यत्वश्रुतिश्चासंस्कृतमनो विषया। नचैवम्, ब्रह्मण औपनिषदत्वानुपपत्तिः, अस्मदुक्तमनसो वेदजन्य ज्ञानानन्तरमेव प्रवृत्ततया वेदोपजीवितत्वात्॥

साक्षात्कारस्येंद्रियजन्यत्वे ब्रह्मसाक्षात्कारेपि मनएव करणमित्याह ( ब्रह्मेति ) सर्वदातदापत्तिमाशंक्याह ( मननेति ) तत्रप्रमाणमाह (मनसैवेति) "दृश्यतेत्वग्रयाबुद्ध्या" इत्याद्याश्रुतिरादिपदार्दया ननु "यतोवाचोनिवर्ततेऽप्राप्यमनसासह" इत्यादिश्रुतेः । कागतिरित्याशंक्याह ( मनइति ) ननु "तं त्वौपनिषदंपुरुषंपृच्छामि" इतिश्रुतिबोधितमुपनिषन्मात्रगम्यत्वं विरुद्धमित्याशंक्य परिहरति ( नचेति ) किंतदनुपजीव्यमानांतरगम्यत्वेतदनुपपत्तिरुततदुपजीव्यमानांतरगम्यत्वे नाद्यः इष्टापत्तेः नद्वितीय अपूर्वस्यतदुपजीव्यानुमानार्थापत्तिगम्यत्वेऽपि वेदगम्यत्वाभ्युपगमादित्याशयेनाह ( अस्मदिति ) मनननिदिध्यासनसहकृतस्य मनसः ॥

**वेदानुपजीविमानांतरगम्यत्वस्यैव वेदगम्यत्वविरोधित्वात् शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयमानसप्रत्यक्षस्य शास्त्रप्रयोजकत्वादुपपद्यते ॥**
**तदुक्तम् । अपिसंराधने सूत्राच्छास्त्रार्थध्यानजाप्रमा ॥ शास्त्रदृष्टिर्मता तांतु वेति वाचस्पतिः पर इति ॥**

अस्मिन्पक्षेशास्त्रदृष्टिसूत्राविरोधं परिहरति ( शास्त्रेति ) तथाच तत्रशास्त्रदृष्टिपदेनमानसं प्रत्यक्षमेवतत्प्रयोज्यत्वादुच्यत इत्यर्थः।वाचस्पतिमिश्राणामिदं मतमित्यत्र कल्पतरुकारसंमति माह (तदुक्तमिति)शास्त्रार्थध्यानजाप्रमाशास्त्रदृष्ट्यातूपदेशोवामदेववदिति सूत्रेशास्त्रदृष्टिशब्देनाभिमताताँतथाभूतांशास्त्रदृष्टिं वाचस्पतिर्जानाति यतः परःसर्वोत्कृष्टः तथाभूता प्रमैवशास्त्रदृष्टिरित्यत्रकोहेतुरित्याशंक्योक्तमपीति "आपिसंराधनेप्रत्यक्षानुमानाभ्याम्" इतिसूत्रात् । अपिचैनमात्मानं निरस्तसमस्तप्रपंचमित्युक्तम् । संराधनस्यभक्तिध्यानप्रणिधानाद्यनुष्ठानस्य कालेयोगिनः पश्यंति तत्रहेतुः प्रत्यक्षानुमानाभ्यांश्रुतिस्मृतिभ्यां तथाच श्रुतिः । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तुतंपश्यतिनिष्कलं च ध्यायमान इत्याद्या स्मृतिश्च ॥

यं विनिद्रा जितश्वासाः संतुष्टाः संयतेंद्रियाः ॥
ज्योतिः पश्यंति युंजानास्तस्मै योगात्मने नमः ॥
इत्याद्या ॥

**तच्चज्ञानं पापक्षयात् सचकर्मानुष्ठानादितिपरंपरया कर्मणां विनियोगः । अत एव "तमेतंवेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसाऽनाशकेन" इत्यादि श्रुतिः, "कषाये कर्मभिः पक्के ततो ज्ञानं प्रव र्तते "इत्यादिस्मृतिश्च संगच्छते ॥**

तादृशज्ञानस्य किंसाधनमित्यपेक्षायामाह ( तच्चेति ) सच पापक्षयः इत्येवं परं परंपुातत्त्वज्ञानेकर्मणां विनियोगः ॥ अत एव परं परयाविनियोगादेव तं पूर्वोक्तमेतमनंतरोक्तं परमात्मानं ब्राह्मणावेदानुवचनादिभिर्वेदितुमिच्छंति वेदानुवचनं वेदाध्ययनं अनाशकमनाशनं हितमितमेध्याशनं तत्र प्रत्ययार्थतया प्रधानभूतायामुत्कटेच्छायां वेदानुवचनादीनां साधनतेतिवाचस्पतिमिश्राः । अश्वेन जिगमिषतीत्यादाविवधात्वर्थस्य वेदनस्यैव प्राधान्यमाश्रित्य ज्ञाने तेषां साधनत्वमिति विवरणाचार्य्याः । "यस्यैते चत्वारिंशत्संस्कारा" इत्यादिश्रुतिः ॥ "तपसाकल्मषं हंति" इत्याद्यास्मृतिश्चादिपदादेया ॥

**एवं श्रवणमनननिदिध्यासनान्यपि ज्ञानसाधनानि मैत्रेयी ब्राह्मणे "आत्मावा अरेद्रष्टव्यः" इति दर्शनम नूद्य तत्साधनत्वेन "श्रोतव्यो मंतव्यो निदिध्या सितव्य"इति श्रवणमनननिदिध्यासनानां विधानात्। तत्र श्रवणं नाम वेदांतानामद्वितीये ब्रह्मणि तात्पर्या वधारणानुकूलमानसी क्रिया । मननं नाम शब्दा**

वधारितेऽर्थे मानांतरविरोधशंकायां तन्निराकरणानु कूलतर्कात्मज्ञानजनको मानसो व्यापारः। निदिध्या सनं नाम अनादिदुर्वासनया विषयेष्वाकृष्यमाण चित्तस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानु कूलो मानसो व्यापारः ॥

यथाकर्मणां तत्त्वज्ञाने विनियोगस्तथाश्रवणादीनामपीत्याह ( एव मिति ) तत्रबृहदारण्यकश्रुतिं प्रमाणयति ( मैत्रेयीब्राह्मणइति ) याज्ञवल्क्यस्य स्वभार्यया मैत्रेय्यासंवादस्य प्रकरणे तत्र श्रवणादिकं लक्षयति ( तत्रेति ) ॥

तत्र निदिध्यासनं ब्रह्मसाक्षात्कारे साक्षात्कारणं " ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्नि गूढाम्" इत्यादिश्रुतेः । निदिध्यासने च मननं हेतुः, अकृतमननस्यार्थदार्ढ्याभावेन तद्विषये निदिध्यास नायोगात् । मनने च श्रवणं हेतुः,श्रवणाभावे तात्पर्या निश्चयेन शाब्दज्ञानाभावेन श्रुतार्थविषयकयुक्तत्वायु क्तत्वनिश्चयानुकूलमननायोगात् ॥

तत्र किंत्रयाणामपि साक्षात्कारसाधनत्वमुतान्यतमस्य तत्रापि कस्येत्याकांक्षायामाह ( तत्रेति ) "ततस्तु तं पश्यतिनिष्कलं ध्यायमान" इत्याद्याश्रुतिरादिपदोपादेया ॥ १४ ॥

एतानि त्रीण्यपि ज्ञानोत्पत्तौ कारणानीति केचिदा चार्याऊचिरे । अपरेतु श्रवणं प्रधानम् । मननानि दिध्यासनयोस्तु श्रवणात्पराचीनयोरपि श्रवणफल

ब्रह्मदर्शननिर्वर्तकतया आरादुपकारकांगत्वमित्याहुः तदप्यंगत्वं न तार्तीयशेषत्वरूपं तस्य श्रुत्याद्यन्यतमप्रमाणगम्यस्य प्रकृते श्रुत्याद्यन्यतमाभावेऽसंभवात् ॥

निदिध्यासनस्य मननायतत्त्वात्तस्य च श्रवणाधीनत्वात्त्रीण्यपि साक्षात्परंपरयाच ज्ञानोत्पत्तिसाधनानीत्याचार्यवाचस्पतिमिश्रमतमुपसंहरति ( एतानीति ) अपरे विवरणाचार्यास्तु पराचीनयोरनन्तरभाविनोः आरात्सामीप्यात्। नन्वंगत्वमपि किंतार्तीयशेषत्वरूपमुतमृत्पिंडादिकार्ये घटादौ चक्रादीनामिव सहकारिकारणत्वरूपमित्याशंक्य द्वितीयमाश्रयितुमाद्यं निराकरोति ( तदप्यंगत्वमिति ) ॥

तथाहि; 'व्रीहिभिर्यजेत' 'दध्नाजुहोति' इत्यादाविव मनननिदिध्यासनयोरंगत्वे न काचित्तृतीया श्रुतिरस्ति, नापि "बर्हिर्देवसदनं दामि" इत्यादिमंत्राणां बर्हिःखंडनप्रकाशनसामर्थ्यवत् किंचिल्लिंगमस्ति ॥

तार्तीयं तृतीयाध्यायस्थं श्रुत्याद्यभावं स्फुटयति ( तथाहीति ) ॥

नापि प्रदेशांतरपठितप्रवर्ग्यस्याग्निष्टोमे प्रवृणक्तीति वाक्यवच्छ्रवणानुवादेन मनननिदिध्यासनयोः विनियोजकं किंचिद्वाक्यमस्ति नापि 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्यावगतफलसाधनताकदर्शपूर्णमासप्रकरणे प्रयाजादीनामिव फलसाधनत्वेनावगतस्य श्रवणस्य प्रकरणे मनननिदिध्यासनयोराम्नानम् ॥

ननु द्रष्टव्य इति दर्शनानुवादेन श्रवणे विहिते सति फलवत्तया श्रवणप्रकरणे तत्सन्निधावाम्नातयोर्मनन निदिध्यासनयोः प्रयाजन्यायेन प्रकरणादेवांगतेति चेत्,न ते ध्यानयोगानुगता अपश्यन्नित्यादि श्रुत्यं तरे ध्यानस्य दर्शनसाधनत्वेनावगतस्यांगाकांक्षायां प्रयाजन्यायेन श्रवणमननयोरेवांगतापत्तेः क्रमस माख्ये च दूरनिरस्ते ॥

प्रकरणाभावोनास्तीतिशंकते ( नन्विति ) अविशेषेण साधनतयाश्रूयमाणेषु श्रवणादिषु किंप्रधानं साधनमित्याकांक्षायां श्रुत्यंतरबलान्निदिध्यासनस्यैव प्रधानत्वापत्त्या श्रवणस्य प्रकरणित्वासिद्धिरित्याह ( तेइति ) ॥

किंच प्रयाजादावंगत्वविचारः सप्रयोजनः पूर्वपक्षेविकृतिषु न प्रयाजाद्यनुष्ठानं सिद्धांते तु तत्रापि तदनुष्ठा नमिति प्रकृतेतु श्रवणं न कस्यचित्प्रकृतिः येन मन ननिदिध्यासनयोस्तत्राप्यनुष्ठानमंगत्वविचारफलं भवेत् तस्मान्न तार्तीयशेषत्वं मनननिदिध्यासनयोः ॥

नन्वस्यां श्रुतावात्मदर्शनानंतरं विधीयमानं श्रवणमेव प्रकरणिश्रुत्यंतरस्यैतदनुसारिव्याख्यानसंभवादित्याशंक्याह ( किंचेति ) विकृतिषु सौर्यादिषु ॥

किंतु यथा घटादिकार्येमृत्पिंडादीनां प्रधानकारणता चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यप

देशः तथा श्रवणमनननिदिध्यासनानामपीति मंतव्यं सूचितं चैतद्विवरणाचार्यैः शक्तितात्पर्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् ॥

ननु मनननिदिध्यासनयोस्तार्तीयशेषत्वं न किंतु श्रवणसहकारित्वमितीदमेवविवरणाचार्याभिमतामितिकथं ज्ञातमित्यत आह ( सूचितंचेति ) ॥

मनननिदिध्यासनेतु चित्तस्य प्रत्यगात्मप्रवणतासंस्कारपरिनिष्पन्नतदेकाग्रवृत्तिकार्यद्वारेण ब्रह्मानुभवहेतुतांप्रतिपद्यते इति फलंप्रत्यव्यवहितकरणस्य विशिष्टशब्दावधारणस्य व्यवहिते मनननिदिध्यासने तदंगेऽगीक्रियते इति ॥

क्वेत्यपेक्षायामाद्यवर्णकस्थं तद्वाक्यं पठति शक्तीत्यादिअंगीक्रियेतइत्यंतम् ॥

श्रवणादिषु च मुमुक्षूणामधिकारः काम्ये कर्मणि फलकामस्याधिकारित्वात् । मुमुक्षायांच नित्यानित्यवस्तुविवेकस्येहामुत्रार्थफलभोगविरागस्य शमदमोपरतितितिक्षासमाधानश्रद्धानां च विनियोगः ॥

श्रवणादौकस्याधिकारइत्यपेक्षायामाह(श्रवणादिष्विति)मोक्षरूपफलकामनयाक्रियमाणश्रवणादिकमपि काम्यमितिभावः । नित्यानित्ययोरात्मानात्मनोर्वस्तुनोर्विवेकस्य नित्यानित्ययोर्वसतीति नित्यानित्यवस्तुतयोर्नित्यत्वानित्यत्वधर्मयोर्वाविवेकस्य ॥

अन्तरिंद्रियनिग्रहः शमः, बहिरिन्द्रियनिग्रहो दमः, विक्षेपाभाव उपरतिः, शीतोष्णादिद्वंद्वसहनं तितिक्षा, चित्तैकाग्र्यं समाधानं गुरुवेदान्तवाक्ये विश्वासः श्रद्धा, अत्रोपरमशब्देन संन्यासोऽभिधीयते । तथाच संन्यासिनामेव श्रवणाधिकार इति केचित् । अपरेतु उपरमशब्दस्य संन्यासवाचकत्वाभावाद्विक्षेपाभावमात्रस्य गृहस्थेष्वपि संभवात् जनकादेरपि ब्रह्मविचारस्यश्रूयमाणत्वात्सर्वाश्रमसाधारणं श्रवणादिविधानमित्याहुः ॥

शमादील्लक्षयंति ( अंतरिति ) श्रवणादिव्यतिरिक्ताधिकारानुपयुक्तां विषयेभ्यो मनसोनिग्रहः शमस्तादृशविषयेभ्योबहिरिंद्रियाणां श्रोत्रादीनां-निग्रहोदमः गृहस्थादीनां श्रवणादावनधिकारं मन्यमानानां केषांचित्सं-न्यासिनां मतमाह ( अत्रेति ) शमादिष्वित्यर्थः ॥ वाचस्पतिविश्रमत-माह ( अपरेत्विति ॥

सगुणोपासनमपि चित्तैकाग्र्यद्वारा निर्विशेषब्रह्मसाक्षात्कारे हेतुः ।

तदुक्तम्—

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ॥
ये मंदास्तेऽनुकंप्यंते सविशेषनिरूपणैः ॥ १ ॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ॥
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥२॥ इति ॥

ननु सगुणोपासनाया अपि मुक्तिफलदातृत्वश्रवणाच्छ्रवणादिसमासादिततत्त्वज्ञानमेव मोक्षसाधनमिति कथमित्याशंक्याह ( सगुणेति ) निदिध्यासनात्मकचित्तैकाग्र्यद्वारा "तेत्रांतस्तद्धर्मोपदेशात्" इति सूत्रस्थकल्पतरुवचनमुदाहरति ( तदुक्तमिति ) येमंदा अकृतसगुणोपासनत्वादवशीकृतचिताः ॥

**सगुणोपासकानां चार्चिरादिमार्गेण ब्रह्मलोकगतानां तत्रैवश्रवणाद्युत्पन्नतत्त्वसाक्षात्काराणां ब्रह्मणा सह मोक्षः। कर्मिणांतु धूमादिमार्गेण पितृलोकगतानामुपभोगेनकर्मक्षये सति पूर्वकृतसुकृतदुष्कृतानुसारेण ब्रह्मादिस्थावरांतेषु पुनरुत्पत्तिः, तथाच श्रुतिः "रमणीयचरणा रमणीयां योनिमापद्यंते कपूयचरणाः कपूयांयोनि मापद्यन्ते" इति ॥**

ननु येषां सगुणोपासकानामत्रश्रवणाद्यभावात्साक्षात्कारो न जातस्तेषां कागतिरित्याशंक्याह ( सगुणेति ) आदिपदमहरादिसंग्राहकं अर्चिराद्यभिमानिदेवतोपर्यारुह्ययेन मार्गेण गम्यते तेनैवमग्रेपीत्यर्थः। कर्म्मिणां तु नैवमित्याह ( कर्मिणामिति ) आदिपदेन रात्र्यादि संग्रहः (ब्रह्मादीति) ब्राह्मणादिरमणीयं चरणमाचरणं येषां ते तथा सुकृतकर्माणो रमणीयां योनिमापद्यंते ब्राह्मणयोनिं वा क्षत्रिययोनिंवा वैश्ययोनिं वा कपूयं कुत्सितं चरणं येषां ते तथा दुष्कृतकर्माणः कुपूयां योनिमापद्यंते श्वयोनिं वा चांडालयोनिं वा शूद्रयोनिं वेति ॥

**प्रतिषिद्धानुष्ठायिनां तु रौरवादिनरकविशेषेषु तत्त**

---

१ यएषोंतरादित्येहिरण्यमयःपुरुषोदृश्यते इत्यादिवाक्येयएषोंतरादित्येयएषोंतरक्षिणीतिच श्रूयमाणःपरमेश्वरएवनसंसारोकुतस्तद्धर्मोपदेशात् तस्यपरमेश्वरस्ययेधर्मासर्वपाप्मापिद्धत्वादिरूपास्तेषामस्मिन्वाक्येउपदेशादित्यर्थः।

त्पापोपचिततीव्रदुःखमनुभूय श्वशूकरादितिर्यग्योनिषु स्थावरादिषुचोत्पत्तिरित्यलं प्रसंगादागतप्रपञ्चेनेति ॥

निर्गुणब्रह्मसाक्षात्कारवतस्तु न लोकांतरगमनं "न तस्य प्राणा उत्क्रामंति "इति श्रुतेः। किन्तु यावत्प्रारब्धकर्मक्षयं सुखदुःखे अनुभूय पश्चादपवृज्यते ॥

तर्हिज्ञानप्राप्त्युत्तरक्षणे तस्य विदेहकैवल्यं स्यादित्याशंकते (किंत्विति) अपवृज्यते मुच्यते ॥

ननु "क्षीयंते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादि श्रुत्या।"ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इत्यादि स्मृत्या च ज्ञानस्य सकलकर्मक्षयहेतुत्वनिश्चये सति प्रारब्धकर्मावस्थानमनुपपन्नमितिचेत्, न तस्य तावदेवचिरं यावन्न विमोक्ष्येथसंपत्स्ये इत्यादिश्रुत्या"नाभुक्तंक्षीयते कर्म" इत्यादिस्मृत्याचोत्पादितकार्यकर्मव्यतिरिक्तानां संचितकर्मणामेव ज्ञानविनाशित्वावगमात् ॥ २८ ॥

प्रारब्धकर्मावस्थानं श्रुतिस्मृतिविरुद्धमिति शंकते ( नन्विति ) आदिपदंतद्यथैषीकातूलमग्नौप्रोतं प्रदूयते एवं "हास्यसर्वेपाप्मानः प्रदूयंते" इत्यादिश्रुतिसंग्राहकं इतरश्रुतिस्मृत्यनुरोधात्प्रारब्धातिरिक्तकर्मणां नाश इत्याह ( तस्येति ) यावन्नविमोक्ष्येप्रारब्धकर्मणो न विमोक्ष्यते अथ प्रारब्धकर्मविमुक्त्यनन्तरं संपत्स्ये संपत्स्यते विमुक्तश्च विमुच्यते

"अवश्यमेवभोक्तव्यं कृतं कर्मशुभाशुभम्" इत्याद्या श्रुतिस्मृतय आदि-पदादेया ॥

**संचितं द्विविधं, सुकृतं दुष्कृतंचेति । तथाच श्रुतिः "तस्य पुत्रा दायमुपयंति सुहृदः साधुकृत्यां द्विषंतः पापकृत्याम्" इति। ननु ब्रह्मज्ञानान्मूलाज्ञाननिवृत्तौ तत्कार्यप्रारब्धकर्मणोपि निवृत्तिः कथं ज्ञानिनो देह धारणमुपपद्यते इति चेत्, न, अप्रतिबद्धज्ञानस्यैवा ज्ञाननिवर्तकतया प्रारब्धकर्मरूपप्रतिबंधकदशायाम ज्ञाननिवृत्तेरनंगीकारात् ॥**

नन्वेवं हास्यसर्वे पाप्मानः प्रदूयंत इत्यादिश्रुत्यनुसारेण संचितानामपि पापकर्मणामेव नाश इति भ्रमव्युदासायाह ( संचितमिति ) दायं धनादिविभागं साधुकृत्यां सुकृतं ननु श्रुत्यादावुक्तमपि प्रारब्धकर्मा बस्थानं युक्तियुक्तं नभवतीति शंकते ( नन्विति ) अज्ञानस्य तदुपादान-भूताया अज्ञानशक्तेः ॥

**नन्वेवमपि तत्त्वज्ञानादेकस्य मुक्तौ सर्वमुक्तिः स्यात् अविद्याया एकत्वेन तन्निवृत्तौ क्वचिदपि संसारायोगा दिति चेत्, न,॥ इष्टापत्तेरित्येके। अपरेत्वेतद्दोषपरि हाराय"इन्द्रोमायाभिः" इतिबहुवचनश्रुत्यनुगृहीतम विद्या नानात्वमंगीकर्तव्यमित्याहुः ॥**

प्रतिबंधकापगमेज्ञानेनाज्ञाननिवृत्या सर्वमुक्तिप्रसंग इति शंकते ( नन्विति ) इन्द्रः परमात्मा मायाभिरविद्याभिः पुरुरूप ईयते बहुरूपः प्रतीयते ॥

अन्येत्वेकैवाविद्या तस्या एवाविद्याया जीवभेदेन ब्रह्म स्वरूपावरणशक्तयो नाना तथाच यस्य ब्रह्मज्ञानं तस्य ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाशः नत्व न्यं प्रति ब्रह्मस्वरूपावरणशक्तिविशिष्टाविद्यानाश इत्यभ्युपगमात् नैकमुक्तौ सर्व मुक्तिः ॥

अस्मिन्पक्षे गौरवमभिप्रेत्य मतांतरमाह (अन्येत्विवाति) अस्मिन्पक्षेमाया भिरित्यस्य मायाशक्तिभिरित्यर्थः ॥

अत एव "यावदधिकारमवस्थितिरधिकारिकाणाम्" इत्यस्मिन्नधिकरणेऽधिकारिपुरुषाणामुत्पन्नतत्त्वज्ञाना नामिन्द्रादीनांदेहधारणानुपपत्तिमाशंक्याधिकारापा दकप्रारब्धकर्मसमाप्त्यनन्तरं विदेहकैवल्यमितिसि द्धांतितम् ॥

तदुक्तमाचार्य्यवाचस्पतिमिश्रैः-

उपासनादिसंसिद्धितोषितेश्वरचोदितम् ॥
अधिकारं समाप्यैते प्रविशंति परंपदम् ॥१॥ इति ॥

एतच्चैकमुक्तौ सर्वमुक्तिरिति पक्षेनोपपद्यते तस्मादे काविद्या पक्षेपि प्रतिजीवमावरणभेदोपगमेन व्यव स्थोपपादनीया । तदेवं ब्रह्मज्ञानान्मोक्षः सचानर्थ निवृत्तिर्निरतिशयब्रह्मानंदावाप्तिश्चेति सिद्धं प्रयोजनम् ॥

इति श्रीधर्म्मराजदीक्षितविरचितायां वेदान्तपरिभाषाया मष्टमप्रयोजनपरिच्छेदः समाप्तः ॥ ८ ॥

कैः सिद्धांतितमित्यपेक्षायामाह ( तदुक्तमिति ) इदमेवमतं सम्यगि-तिद्योतनायाह ( एतच्चेति ) यस्मादेवं तस्मात्, व्यवस्था बद्धमुक्तव्यवस्था परिच्छेदार्थं निगमयति ( तदेवमिति ) ॥

मूलकृत्सूनुनाऽत्यक्तंपरित्यक्तं च विस्फुटम् ॥
व्याख्यातं दूषितं तेन मयेदं च विभूषितम् ॥ १ ॥
गोचारेऽनकेऽडिरेऽभिनुतो गोत्रात्मजेडाखिलेड्
व्याडेडाप्ततनुः कवीडनुगतद्विट् चण्डभेरुण्डहा ॥
गोराट्छुद्धधियाधिकत्विडमलक्षीरोत्थविभ्राडजः
स स्यादभ्ररुडाभ्रवाडभृदरं देवो दृढो मे मृडः ॥ २ ॥
स्वजनबदनचारी पापसंघापहारी
स्वजनसदनकारी प्रोल्लसद्गोत्रधारी ॥
विकचरदनसारीज्योत्स्निकानंदकारी
मदनसुषमकारिः सोस्तु मे हृद्विहारी ॥ ३ ॥
गोत्रांगवसुतारेशमिते ( १८६७ ) संवत्सरे शुभे ॥
फाल्गुने सितसप्तम्यां वृषेसिद्धागुरावियम् ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालगोपालतीर्थश्रीपादशिष्यदत्तवं-शावतंसरामकुमारसूनुधनपतिसूरिसुतशिवदत्तकृतायां वेदान्त-परिभाषार्थदीपिकायामष्टमःपरिच्छेदः ॥ ८ ॥


समाप्तोऽयं ग्रन्थः ।

# विक्रय्य वेदान्तग्रंथाः ।

| नाम. | की. रु. आ. |
|---|---|
| शारीरक ( शांकरभाष्य ) रत्नप्रभाटीका व्यासाधिकरणमाला और भक्तिसूत्र सभाष्य अक्षर बड़ा ... | १०–० |
| ब्रह्मसूत्र ( शारीरक ) भाषाटीका... ... ... | १–८ |
| वेदांतसार संस्कृतमूल और संस्कृतटीका तथा भाषाटीकासहित ... ... ... ... | ०–१२ |
| पंचदशीसटीक ... ... ... ... | २–० |
| पंचदशी पं० मिहिरचंद्रकृत अत्युत्तम भाषाटीका सहित | ४–० |
| पंचदशी भाषा–आत्मस्वरूपजीकृत ... ... | ४–० |
| गीता चिद्घनानंदस्वामिकृत गूढार्थदीपिका मूल अन्वय पदच्छेदके सहित भाषाटीका ... ... | ७–० |
| गीता आनंदगिरिकृतभाषाटीका ... ... | ३–० |
| श्रीमद्भगवद्गीता सान्वयब्रजभाषा दोहासहित ... | १–४ |
| गीतामृततरंगिणी भाषाटीका ( रघुनाथप्रसादकृत ) अक्षरबड़ा ... ... ... ... | १–० |
| गीतामृततरंगिणी भाषाटीका पाकिटबुक... ... | ०–१२ |
| श्रीरामगीता मूल ... ... ... | ०–२ |
| श्रीरामगीता भाषाटीका–पदप्रकाशिका अनुवादसमुच्चय और विषमपदोंके सहित ... ... ... | ०–८ |
| श्रीमद्भगवद्गीतापंचरत्नअक्षरमोटागुटकारेशमी ... | १–० |
| " पंचरत्न अक्षरबडा खुलापत्रा छोटीसंची ... | १–८ |
| " पंचरत्न अक्षरबडा लंबीसंची खुला ... ... | १–० |
| " पंचरत्न भाषाटीका ... ... ... | २–० |
| गीता श्रीधरीटीका सहित ... ... ... | १–० |

| नाम. | | | की. रु. आ. |
|---|---|---|---|
| गीता बडेअक्षरकी १६ पेजी गुटका | ... | ... | ०—१२ |
| गीता बडेअक्षरकी खुली १२ पेजी | ... | ... | ०—१० |
| गीता गुटका विष्णुसहस्रनाम सहित | ... | ... | ०—८ |
| गीता पंचरत्न और एकादशरत्न | ... | ... | ०—१२ |
| " पंचरत्न द्वादशरत्न ... | ... | ... | ०—१० |
| गीतापंचरत्न नवरत्न पाकिट बुक् | ... | ... | ०—७ |
| गीता गुटका पाकिट बुक् ... | ... | ... | ०—५ |
| अष्टावक्रगीता अत्युत्तम सान्वय भाषाटीका | | ... | १—० |
| शिवगीता भाषाटीकासहित | ... | ... | ०—१२ |
| गणेशगीता भाषाटीकासहित | ... | ... | ०—६ |
| गीतापंचदश भाषाटीका-[ काश्यपगीता, शौनकगीता, अष्टावक्रगीता, नहुषगीता, सरस्वतीगीता, युधिष्ठिर-गीता, बकगीता, धर्मव्याधगीता, श्रीकृष्णगीतादि ] | | | ०—१२ |
| पाण्डवगीता भाषाटीका सह | ... | ... | ०—३ |
| तथा मूल ४ रत्न बडा अक्षर | ... | ... | ०—२ |
| अपरोक्षानुभूतिसंस्कृत टीका भाषाटीका सहित | | .... | ०—१० |
| आत्मबोध भाषाटीका ... | ... | .... | ०—३ |
| तत्त्वबोध भाषाटीका... ... | ... | .... | ०—२ |
| वेदांतग्रंथपंचकम् ( वाक्यप्रदीपः वाक्यसुधारसः हस्तामलकः निर्वाणपंचकं मनीषापंचकं ) स. | | ... | ०—८ |
| वेदस्तुति भाषाटीका सह .... | .... | ... | ०—८ |
| गीतारामानुजभाष्य.... .... | ... | ... | २—० |
| वेदांत डिमुडिम् .... .... | .... | ... | ०—१॥ |
| वैराग्यभास्कर भाषाटीका ... | .... | ... | ०—८ |
| सिद्धांतचंद्रिका सटीक ( वेदांत ) | ... | ... | ०—८ |

| नाम. | की. रु. आ. |
|---|---|
| हरिमीडेस्तोत्रसटीक. ... ... ... | ०-१४ |
| द्वादशमहावाक्यविवरण .... ... ... | ०-४ |
| त्रोटक सटीक .... .... .... ... | ०-१० |
| वेदांतरामायण भाषाटीका सह .... | १-८ |
| वेदान्तसंज्ञा भाषाटीका ... ... ... | ०-८ |
| शांडिल्यसूत्र सभाष्य ( भक्तिमीमांसा ) ... ... | ०-८ |
| प्रश्नोत्तरमुक्तावली भाषाटीका ( वेदान्त) ... ... | ०-३ |
| जीवन्मुक्तगीता भाषाटीका .... ... .... | ०-१ |
| भक्तिमीमांसा-शांडिल्यऋषिप्रणीता आचार्य स्वप्नेश्वर-विरचितेन भाष्येन संयुता .... .... .... | ०-८ |
| योगवासिष्ठ सटीक संस्कृत .... ... ... | २०-० |

## वेदान्त भाषा ।

| | |
|---|---|
| आत्मपुराण भाषा [ चिद्घनानन्द स्वामिकृत ] ... | १३-० |
| योगवासिष्ठभाषा बड़ा संपूर्ण ... ... | १२-० |
| योगवासिष्ठगुटकावैराग्य मोक्षप्रकरण वेदांत उत्तम कागज अक्षर बड़ा ... ... ... | ०-१२ |
| वासिष्ठसार भाषा वेदांत ६ प्रकरण ... ... | २-८ |
| विचारसागर सटीक निश्चलदासजीकृत ... ... | २-० |
| एकादशस्कंध भाषा चतुरदासकृत और नानकविलास | ०-१२ |
| अमृतधारा वेदांत ... ... ... | ०-१२ |
| संतोषसुरतरु वेदांत... ... ... | ०-८ |
| संतप्रभाव वेदांत ... ... ... ... | ०-६ |
| विचारमालासटीकपंचीकरणसहित ... ... | ०-१२ |
| अभिलाषसागर भाषा ( वेदान्त ) ... ... | २-० |
| आत्मबोधतत्त्वबोधवेदस्तुति भाषा ... ... | ०-३ |

